NOW AVAILABLE AT YOUR NEAREST NEWS STAND FOR RS.15 PER COPY

A TREASURE-TROVE FOR TALENTED TOTS



# Junior
CHANDAMAMA




PAGE AFTER PAGE WILL KINDLE THE IMAGINATION OF THE CHILD

## FOR ANNUAL SUBSCRIPTION PAY ONLY RS. 150
AND SAVE RS. 30

*Mail the form below along with the remittance to :* SUBSCRIPTION DIVISION, Chandamama India Limited, 82 Defence Officers' Colony, Ekkatuthangal, Chennai - 600 097.

## SUBSCRIPTION FORM

I wish to be a subscriber of Junior Chandamama.

Name____________________________

Age______ Class______ School________________

Home Address__________________________

______________________________________

____________________________ PIN__________

I am enclosing D/D No__________ on ________________ Bank/ M.O. receipt No________ issued by____________ P.O. for Rs.150. Please start supply from______________ (month).

Date__________ Signature



**चन्दमामा**  सम्पुटः -२२  एप्रिल् -२००६  सञ्चिका - ४



## अन्तरङ्गम्



## एतस्य अङ्कस्य विशेषाः














**ग्राहकशुल्कम् -**

अमेरिका-केनडादेशयोः कृते

प्रतिकृतिमूल्यम् - $२

वार्षिकं शुल्कं - $२०

भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -

**Subscription Division**

**CHANDAMAMA INDIA LIMITED**

No. 82, Defence Officers Colony,

Ekkatuthangal, CHENNAI - 600 097

E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**

वायुयानेन भारतेतरदेशान् प्रति

वार्षिकं (१२ सञ्चिकाः) - रू.९००/-

भारते रू. १५०/- (बुक्पोस्ट् द्वारा)

भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा

'Chandamama India Limited' नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -

चेन्नै - *शिवाजी*, Ph - 044-22313637/22347399

Fax: 044-22312447, Mobile: 98412-77347

email : advertisements @ chandamama.org

देहली - OBEROI MEDIA SERVICES, Telefax (011) 22424184

Mobile: 98100-72961, email: a.s.oberoi@indiatimes.com



संस्थापकौ -
चक्रपाणिः, बि. नागिरेड्डिः च

# स्वस्थे शरीरे स्वस्थं मनः

सद्विचाराः असद्विचाराः च नाणकस्य पार्श्वद्वयमिव । ते अस्माकं मनसि सदा उद्भवन्ति, अस्माकं कर्मसु प्रभावं जनयन्ति च । किं सत्, किम् असत् इति निर्णयः न हि सुकरः । जनाः सदसद्विषये बहुधा विप्रतिपद्यन्ते ।

मानवीयमौल्यानि एव परिशीलयाम । किम् उत्तमं, किं च अनुत्तमम् इति कथं निर्णेतुं शक्नुयाम ? यत् स्वार्थरहितं, यच्च सर्वोपकारकं तत् उत्तमम् इति, यत् जनान् व्यथयति, तेषां भावनाः आहन्ति, यच्च प्राणहारकं भवति तत् अनुत्तमम् इति च परिगण्यते प्रायः । इदानीं प्रश्नः उदेति - सर्वहितकारकाणि जीवनमौल्यानि कथम् आत्मसात्करणीयानि इति । तत्तज्जनस्य मानसिकं स्वास्थ्यं, मानवीयमौल्यानां विषये आदरभावं च अवलम्बते एतत् ।

केचन शरीरेण मनसा च समर्थाः भवन्ति । यदि तत् सामर्थ्यं विशालस्य समाजस्य हिताय उपयोक्तुं यः न शक्नोति, स्वार्थाय एव तत् उपयुज्यते, अधिकाधिकतया अधिकारग्रहणाय एव तस्य उपयोगः येन क्रियते, सः उच्यते 'राक्षसतुल्यः' इति । उत्तमान् आचारान्, उत्तमान् विचारान् च यः जीवने अनुसरति सः एव उत्तमः जनः, समाजस्य उत्तमः सदस्यः च भवितुम् अर्हति ।

एप्रिल्मासस्य ७ दिनाङ्के जागतिकं स्वास्थ्यदिनम् आचर्यते । तत् निमित्तीकृत्य वयं स्मरेम यत् स्वस्थं मनः स्वस्थं शरीरं च मानवं परिपूर्णं करोति इति ।

सम्पादकः - विश्वम्

Visit us at : http://www.chandamama.org



# वाचकानां पुटोऽयम्

सर्वासु बालपत्रिकासु चन्दमामा एव मम चित्तम् आकर्षति । एषा वाचकानां पुरतः विचित्रम् अद्भुतं लोकम् उपस्थापयति । अश्रुतपूर्वाणि अदृष्टपूर्वाणि च विविधानि वैशिष्ट्यानि प्रदर्शयन्ती चन्दमामा वाचकानां कृते वरायते । प्रायः आ पञ्चविंशतेः वर्षेभ्यः अहं चन्दमामायाः वाचकः अस्मि । किञ्चित्कालं यद्यपि एतस्याः प्रकाशनं स्थगितम् आसीत्, तथापि प्रकाशनम् इदानीम् अविरतम् अनुवर्तते यत् तत् तु वाचकानां भाग्यम् एव । मम अपेक्षा अस्ति यत् चन्दमामा एषा जगतः शिरोमणिः भवेत् इति ।

***– जि. जान् केनडी, हैदराबाद्***

भारतीये साहित्याकाशे नक्षत्रायते चन्दमामा । एतस्याः वैशिष्ट्यानि तादृशानि सन्ति यत् एतां पठितवान् कश्चित् प्रशंसनं विना स्थातुं न अर्हति एव । कश्चन वाचकः सन् एतत् पत्रं लिखन् अस्मि अहम् । वेतालकथाः अत्रत्याः नित्यनूतनाः । लोकप्रिया धारावाहिनी उत्कण्ठां वर्धयति, पठनप्रवृत्तिम् उत्तेजयति च । विविधदेशानां जानपदकथाः मनोविकासं सम्पादयन्ति । जातककथाः पौराणिककथाः च अपूर्वाः भवन्ति सदापि । अग्रे पञ्चतन्त्रकथाः अरेबियाकथाः चापि प्रकाशनीयाः इति मम निवेदनम् । लोकप्रियाणां धारावाहिनीनां पौराणिककथानां च प्रकाशनावसरे अग्रे अपि चन्दमामा स्वस्य गुणस्तरं रक्षतु इति मम अपेक्षा ।

***– महर्षिः, इलहाबाद***

बाल्ये अहं चन्दमामां पाठ्यपुस्तकानाम् अन्तः निगूह्य पठामि स्म महता औत्सुक्येन । वेतालकथाः, जातककथाः, अन्याः पठनसामग्र्यः च अद्यापि मां रञ्जयन्ति । अतः चन्दमामाः अहं पुस्तकालये रक्षामि । बाल्ये पठिताः 'अर्धाणकराजः' 'सावधानाः भवत' इत्यादयः कथाः अद्यापि मम स्मृतिपथे सन्ति । आकाशस्थे चन्द्रमातुले वस्त्रनिर्मात्री वृद्धा अस्ति उत शशकः इति तु अहं न जाने, किन्तु एतावत् तु अवश्यं जानामि यत् चन्दमामा एषा अतिमहत्त्वोपेता पत्रिका इति । एतस्मिन् अपि वयसि चन्दमामापठने मम रुचिः अस्ति एव । प्रतिमासम् एतां सोत्कण्ठं प्रतीक्षे । एतस्याः पठनात् मनसः शान्तिः प्राप्यते । मासिकी एषा गृहजनानां सर्वेषां मनोविनोदं ज्ञानवृद्धिं च सम्पादयति ।

***– दुर्गा, वर्धा***

चन्दमामायाः प्रकाशकाय वाचकेभ्यः च षष्ठिवर्षीयम् अभिनन्दनं मम । वाचकानां कृते स्थितायां कथायां पुनः पुनः पृच्छ्यते – का कक्ष्या, किं वयः इति । किम् अधिकवयस्काः चन्दमामायाः वाचकाः न भवन्ति ? या समग्रे भारते सर्वेषां मनः मोहयति सा सर्वैः पठितुम् अर्हा एव ।

***– वासुदेवभट्टः, कारवार***



# मनसः परिवर्तनम्

गिरिपुरराज्यस्य राजा गणपतिवर्मा । तस्य राज्ये रामवरनामकं किञ्चन पत्तनम् आसीत् । तस्मिन् पत्तने रमणनामकः कश्चन वणिक् । तस्य उभे पुत्र्यौ, एकः पुत्रश्च । पुत्रस्य नाम धनशेखरः इति, पुत्र्योः नामनी शान्तामणिः चिन्तामणिः चेति । रमणः स्वपुत्र्याः विवाहं राजधान्यां निवसता उद्योगिना वरेण सह कर्तुम् ऐच्छत् ।

तादृशः योग्यः कश्चन वरः राजधान्याम् अस्ति इति वार्ता अपि श्रुता रमणेन । सः वरः राज्ञः कोशागारे कार्यं करोति स्म । दिवाकरनामकः सः अतीवसुन्दरः बुद्धिमान् पराक्रमी च ।

सः दिवाकरः अपि विवाहार्थं राजधान्याः बहिः स्थितायाः कस्याश्चन सुन्दर्याः निरीक्षणे एव आसीत् ।

रमणः राजधानीं गतः । द्वित्राणि दिनानि परिचितैः सम्मिल्य दिवाकरस्य गुणादिविषयं सः अवगतवान् । ततः स्वयमेव गत्वा दिवाकरेण सह वार्तालापं कुर्वन् तस्य उद्योगविषये प्रश्नान् पृष्टवान् ।

दिवाकरस्य व्यवहारेण उत्तरेण च सन्तुष्टः रमणः पुत्र्याः विवाहप्रस्तावं श्रावयित्वा – ''यदि इच्छा अस्ति तर्हि भवान् रामवरम् आगत्य कन्यां द्रष्टुम् अर्हति अपि'' इति अवदत् ।

ततः सप्ताहस्य अनन्तरं दिवाकरः रामवरम् आगतः । रमणस्य गृहं यदा तेन प्राप्तं तदा तत्र काचन युवतिः तेन दृष्टा । 'एषा एव विवाहयोग्या कन्या स्यात्' इति चिन्तितवान् दिवाकरः । गृहाभ्यन्तरे आगच्छन्तं दिवाकरं स्वागतवचनेन सन्तोष्य रमणः एकैकशः गृहजनानां परिचयं कारितवान् ।

तस्मिन् समये रमणस्य द्वितीया पुत्री रुदती तत्र आगता ।

''पुत्रि ! किम् अभवत् भवत्याः ? किमर्थं रोदनम् ?'' इति रमणः पृष्टवान् ।

''आपणतः फलानि स्वीकृत्य प्रत्या-

भवानी दास



गच्छन्तीं मां मार्गे सर्वेषां पुरतः सः दुष्टः लक्ष्मणः अश्लीलवचनानि उक्तवान्'' इति अश्रुणि मार्जयन्ती उक्तवती चिन्तामणिः ।

''स लक्ष्मणः मूर्खः दुष्टश्च । सर्वदा एतादृशः एव व्यवहारः तस्य । तदीयः पिता गजराजः कुख्यातः चोरः । महाचोरस्य पुत्रं को वा किमपि वक्तुम् अर्हेत् ? सर्वदा दुष्टेभ्यः दूरे स्थितिः एव खलु उत्तमा ? भवती किमर्थम् एकाकितया फलापणं गतवती ?'' इति पुत्रीम् एव तर्जितवान् रमणः ।

''एषा सर्वदा एवमेव करोति । किमपि कृत्वा अस्मान् कष्टगर्ते पातयति'' इति पार्श्वे स्थितः ज्येष्ठभ्राता धनशेखरः कोपेन अनुजां पश्यन् उक्तवान् ।

चिन्तामणिः रुदती एव ततः गृहस्य अन्तः गतवती ।

दिवाकरः अपि प्रतिगन्तुं रमणस्य अनुज्ञां प्रार्थितवान् । तदा रमणः – ''सा मम द्वितीया पुत्री । अन्येषां पुरतः कथं व्यवहारः कर्तव्यः इति सा न जानाति । मम ज्येष्ठायाः पुत्र्याः विषये भवतः अभिप्रायः कः ?'' इति सङ्कोचेन एव पृष्टवान् ।

''एतादृशे विषये निर्णयं कर्तुं कश्चन कालः अपेक्षितः । मया बहुदूरं गन्तव्यम् अस्ति । अन्धकारः अपि आवृतः इव । अतः मम गमनम् उचितम्'' इति वदन् दिवाकरः गृहात् बहिः आगतः ।

रमणगृहात् प्रस्थितेन दिवाकरेण राजधानीं प्रति प्रस्थितः एकः वृषभशकटः लब्धः एव । तस्मिन् शकटे दिवाकरः उपविष्टः । शकटे अन्ये अपि त्रयः आसन् । शकटः राजधानीं प्रति प्रस्थितः ।

वृषभशकटः महता वेगेन गच्छन् आसीत् । वृषभकण्ठे स्थिताः लघुघण्टाः शब्दं कुर्वत्यः श्रवणानन्दं जनयन्त्यः आसन् । अन्धकारः सर्वत्र प्रसृतः इति कारणात् शकटचालकः एकं दीपं ज्वालितवान् । तदा कश्चन पथिकः उक्तवान् – ''दिवा प्रवासः उचितः । किन्तु समयः न लभ्यते । रात्रौ तु चोराणां भीतिः । किन्तु किं कर्तुं शक्यम् ? कार्यं तु करणीयम् एव'' इति ।

घण्टाद्वयम् अतीतम् । यानम् अरण्यात् बहिः आगच्छत् आसीत् । मार्गे कश्चन स्थूलकायः यानस्य पुरतः आगतः । यानचालकः तं पश्यन् भीत्या कम्पमानः – ''महाचोरः गजराजः आगतः । सर्वे धावन्तु, धावन्तु'' इति चीत्कुर्वन् यानं स्थगितवान् ।

गजराजः मन्दं पदानि स्थापयन् यानसमीपम् आगत्य – ''कोऽपि मत्तः पलायितुं न शक्नोति । भवतां समीपे यानि धनाभरणादीनि सन्ति तानि सर्वाणि समर्पयन्तु'' इति भाययन् उच्चस्वरेण अवदत् ।

याने स्थिताः त्रयः अपि पथिकाः गजराजेन यथा उक्तं तथा कर्तुं सिद्धाः अभवन् ।

तदा दिवाकरः यानात् अधः कूर्दनं कृत्वा यानचालकस्य हस्ते स्थितां कशां स्वीकृत्य गजराजं भाययन् उक्तवान् – ''भोः गजराज ! मम हस्ते संलग्नः किल भवान् ? आ बहुभ्यः दिनेभ्यः भवन्तम् अन्विष्यन् एव आसम् । राज्ञा भवतः बन्धनाय आज्ञा दत्ता अस्ति । ताम् आज्ञाम् अहम् अद्य पालयामि । विना वचनं शरणागतो भवतु भवान् । अन्यथा तीक्ष्णः दण्डः भविष्यति भवतः । यदि धावितुं प्रयत्नः क्रियेत तर्हि अरण्ये स्थिताः सैनिकाः भवन्तं गृह्णीयुः । भवतः शरीरं चूर्णीकृत्य श्वापदेभ्यः बलिं दद्युः ते !'' इति ।

'अरण्ये सैनिकाः सन्ति' इति वार्तां श्रुत्वा गजराजः किङ्कर्तव्यतामूढः सन् स्तम्भीभूतः । अग्रे किं करणीयम् इत्यपि न ज्ञातं तेन । एषः एव योग्यः समयः इति मत्वा दिवाकरः हठात् तम् आक्रम्य तस्य करस्य उपरि ताडनं कृतवान् । तेन गजराजस्य हस्ते स्थितः खड्गः पतितः । तावता अन्ये पथिकाः अपि आगत्य गजराजं बन्द्धुं साहाय्यं कृतवन्तः ।

अनन्तरदिने दिवाकरः गजराजं राजसभाम् आनीतवान् । राजानं प्रवृत्तं सर्वं निवेदितवान् च ।

तदा राज्ञा उक्तं – ''गजराजेन कृतं क्रियमाणं च लुण्ठनादिकम् आ बहुभ्यः दिनेभ्यः शृण्वन् एव अस्मि । जनाः अपि तस्य विषये आरोपं कृतवन्तः । अरण्ये अस्य वासः इति





कारणात् ग्रहीतुं शक्यं न आसीत् । एतादृशं लुण्ठाकं दिवाकरः गृहीतवान् इत्येतदेव एतस्य पराक्रमं धैर्यं च अवगमयति । अहं दिवाकरं मुदा अभिनन्दामि । एवमेव एषः दिवाकरः गजराजस्य पुत्रमपि बन्धुं प्रयासं करोतु इति आज्ञापयामि'' इति ।

कैश्चित् सैनिकैः सह रामवरं गतः दिवाकरः तत्र स्थितं गजराजपुत्रम् उपायेन बद्ध्वा राज्ञः पुरतः आनीतवान् । राजा तस्य आजीवनकारागृहदण्डं विधाय दिवाकरं पुनः अभिनन्दितवान् । दिवाकरस्य कार्येण सन्तुष्टः सन् सः तं प्रहरिणां प्रमुखं घोषितवान् ।

रमणः एतं विचारं ज्ञात्वा भाविनः जामातुः विषये सन्तुष्टः जातः । सः तं द्रष्टुं राजधानीम् आगतवान् । दिवाकरं दृष्ट्वा रमणः अभिनन्दनानि सूचयन् यदा विवाहप्रस्तावम् उक्तवान् तदा दिवाकरः – ''क्षन्तव्यः अहम् । भवतः पुत्र्याः परिणयः मम इष्टाय न'' इति उक्तवान् ।

रमणः निराशतया खेदेन पृष्टवान् – ''एवं किमर्थम् ? मम पुत्री सुन्दरी नास्ति किम् ?'' इति ।

''तस्याः सौन्दर्यम् असौन्दर्यं वा एतस्य कारणं न'' इति उक्तवान् दिवाकरः ।

''भवता इदानीम् उन्नतं स्थानं प्राप्तम् अस्ति । अतः इदानीं भवान् किं राजकुलस्य सम्बन्धम् इच्छति ?'' इति पृष्टवान् रमणः ।

''नास्ति । सर्वथा नास्ति'' इति उच्चस्वरेण उक्तं दिवाकरेण ।

''तर्हि मम पुत्र्याः परिणयस्य अनङ्गीकारे कारणं किम्'' इति पुनः पृष्टवान् रमणः ।

''तत्र कारणं तु – भवतोः पितापुत्रयोः

स्वभावः एव । गते प्रसङ्गे यदा अहं भवतः गृहम् आगतः तदा भवतः द्वितीया पुत्री दुष्ट-युवकस्य अव्यवहारम् उक्तवती । किन्तु भवन्तौ पितापुत्रौ तस्य विषये किमपि न कृतवन्तौ । दण्डनार्हं दुष्टयुवकम् अदण्डयन्तौ उभावपि पुत्र्याः एव दोषः इति निर्णीतवन्तौ । एतादृशस्य निर्वीर्यस्य कुटुम्बस्य सम्बन्धः मम इष्टाय न अभवत्'' इति कोपेन उक्तवान् दिवाकरः ।

''पुत्र ! क्षणं यावत् भवान् 'राजास्थाने उद्योगी अस्मि' इति विषयं विस्मृत्य चिन्तयतु । सामान्यः कश्चन मादृशः जनः सन् भवान् यदि एतां समस्यां परिशीलयेत् तर्हि ज्ञातुं शक्येत यत् मादृशाः कीदृशीम् असहायकताम् अनुभवन्तः भवन्ति इति । तद्दिने मम पुत्रीं यः अश्लीलवचनानि उक्तवान् सः आसीत् दुष्टस्य गजराजस्य पुत्रः । गजराजस्य दुष्टता-विषये बहुवारं जनाः राजानम् अपि उक्तवन्तः एव । किन्तु ततः किमपि प्रयोजनं न सिद्धम् । अस्यां परिस्थितौ यदि वयं गजराजस्य पुत्रस्य विषये आरोपं कृतवन्तः स्याम तर्हि परिणामः कः स्यात् ? वस्त्रस्य उपरि कण्टकं पतितं चेत् अन्ते हानिः वस्त्रस्य एव । एवमेव कण्टकस्य उपरि वस्त्रं पतितं चेदपि हानिः तु वस्त्रस्य एव । उभयत्र अपि परिणामः तु समानः । हानिः वस्त्रस्य एव, न कदापि कण्टकस्य । एतादृश्यां स्थितौ मम पुत्र्या एव खलु जागरूकया भवितव्यम् ? परिस्थितिं विचिन्त्य कार्यकरणं निर्वीर्यतां न द्योतयति । अस्मिन् समये गभीरं चिन्तनं कृत्वा भवान् ततः यथोचितं निर्णयं श्रावयतु'' इति वदन् रमणः ततः प्रतिनिवृत्तः ।

दिवाकरः रमणेन उक्तं विषयं गभीरतया चिन्तितवान् । तदा तेन अवगतं यत् एतादृशे अवसरे सत्यं किम्, सामान्यानां व्यवहारः कथं स्यात् इति । राजोद्योगिनि यत् धैर्यं साहसं च भवति तत् सामान्ये जने न भवति इत्यपि तेन अवगतम् ।

सः अचिन्तयत् यत् पितापुत्रयोः विषये मया कृतः आरोपः असमीचीनः इति । अनु-क्षणम् एव सः शान्तामणिं परिणेतुं स्वसम्मतिं सूचितवान् ।

ततः अल्पे एव काले शान्तामणि-दिवा-करयोः विवाहः सवैभवं सम्पन्नः ।



# बुद्धिहीनता

लोकनाथः कश्चित् बन्धुहीनः युवकः । त्रिंशद्वर्षीयः सः ग्रामीणैः उक्तानि सर्वाणि अपि कार्याणि सन्तोषेण एव करोति स्म । तैः उक्ते निकृष्टे कार्ये अपि जुगुप्सा नास्ति तस्य । बुभुक्षा, निद्रा इत्यादयः समस्याः कदापि तं न बाधन्ते स्म । यदा बुभुक्षा भवति तदा सः निस्सङ्कोचं यस्य कस्यापि गृहं गच्छति स्म, भोजनं प्राप्नोति स्म च ।

रात्रौ अपि यस्य कस्यापि गृहस्य पुरतः स्थिते अङ्गणे शेते स्म सः ! एवं तस्य जीवनं सन्तोषेण एव प्रवर्तते स्म । मयि किमपि नास्ति इति भावः तस्मिन् न उत्पन्नः एव ।

एकदा केनचित् अर्चकेण उक्तानि वस्तूनि आनेतुं सः विपणिं गतः । तत्र आवश्यकानि वस्तूनि सर्वाणि क्रीत्वा विचित्रं प्रदर्शनं सर्वमपि दृष्ट्वा सः ग्रामं प्रतिनिवृत्तः ।

तावता सूर्यास्तः जातः आसीत् । अन्धकारोऽपि सर्वत्र दृश्यते स्म । तथापि चिन्तायाः लेशः अपि न आसीत् लोकनाथे । सः आनन्देन किमपि गायन् आगच्छन् आसीत् ।

ग्रामस्य सीमायां झटिति कश्चन पुरुषः तस्य पुरतः प्रत्यक्षः अभवत् । ''पूर्वं कदाचित् भवान् वञ्चनया माम् आक्रान्तवान्, ताडितवान् च । अद्य मम हस्तम् आगतः भवान् कथं पलायते'' इति वदन् सः लोकनाथं स्कन्धे सम्यक् ताडितवान् ।

लोकनाथः अधः पतितः, किन्तु अनुक्षणमेव उत्थाय स हसितवान् । तदा स पुरुषः आश्चर्येण - ''गर्दभः इव किमर्थं दन्तान् प्रदर्शयन् अस्ति भवान् ?'' इति वदन् पुनः तं ताडयितुं हस्तम् उन्नीतवान् ।

तदा लोकनाथः हसन् एव - ''अहं न गर्दभः । मम नाम लोकनाथः इति'' एवं वदन् पुनः उच्चैः हसन् ततः गतवान् ।





# भयङ्करः खातः

## ६

*[ब्रह्मदण्डिमान्त्रिकस्य शिष्येण जयमल्लेन सह केशवः गजसरोवरे स्नानं कृतवान् । ततः प्रत्यागमनसमये जयमल्लः आगमिष्यन्त्याः आपदः विषयम् उक्तवान् । यावत् तौ गुहायाः समीपं गतौ तावता मान्त्रिकस्य वचनं श्रुतं यत् आगमनसमये समिधः अपि आनेतव्याः इति । तदनन्तरम् ...]*

कालभैरवः बुभुक्षितः अस्ति इति मन्दहास-पूर्वकं ब्रह्मदण्डिमान्त्रिकः यत् उक्तवान् तत् श्रुत्वा केशवः क्षणकालं भीतः । अहं जयमल्लः च यत् सम्भाषणं कृतवन्तौ तत् मान्त्रिकः श्रुतवान् अपि स्यात् कदाचित् इति सन्देहः उत्पन्नः तस्य मनसि । पञ्चघण्टाभ्यन्तरे कस्य मरणं भवेत् इति निश्चितं भविष्यति इति अचिन्तयत् सः ।

केशवः एवं यदा चिन्तयन् आसीत् तदा जयमल्लः समिधां सङ्ग्रहे निरतः आसीत् । यदा समिधां बन्धः सिद्धः तदा तौ तम् उन्नीय मान्त्रिकसमीपं गतवन्तौ । यदा गुहा आसन्ना तदा मान्त्रिकस्य मन्त्रोच्चारणं सम्यक् श्रुतम् । जयमल्लः केशवः च समिधां बन्धं गुहायाः पुरतः स्थापयित्वा विना शब्दम् अन्तः गतौ ।

ब्रह्मदण्डी मान्त्रिकः कालभैरवमूर्तेः पुरतः पद्मासने उपविश्य उच्चैः मन्त्रं पठति स्म, तदा तदा मूर्तिं लक्ष्यीकृत्य पाषाणखण्डं क्षिपति



स्म च । 'एषा अपि किं काचित् पूजा ?' इति भावं प्रदर्शयन् जयमल्लं दृष्टवान् केशवः । तदा जयमल्लः हस्तसङ्केतेन असूचयत् यत् विना सम्भाषणं स्थातव्यम् इति ।

पर्वतगुहायां मान्त्रिकः पूजया कालभैरवं सन्तोषयितुं प्रयासं कुर्वन् आसीत् । तस्मिन् एव समये ब्रह्मपुरे राजा प्रजाः च शत्रुराजस्य आक्रमणं सम्भाव्य चिन्ताक्रान्ताः आसन् । महती भीतिः तान् बाधते स्म । शत्रुसेनायाः सङ्ग्रहः जायमानः अस्ति पर्वतसमीपे इति चिन्तयन्तः आसन् ते । अतः राजा सेनायाः कञ्चित् भागम् आदिष्टवान् आसीत् यत् पर्वतपरिसरे किं प्रवर्तते इति ज्ञात्वा आगन्तव्यम् इति । 'शत्रवः अस्मान् मारयेयुः' इति भयम् अनुभवन्तः एव सैनिकाः प्रर्वतप्रदेशं गतवन्तः । तावता समग्रः पर्वतः कम्पमानः जातः । तस्मात् महाशिलाः पतिताः । बहवः सैनिकाः मृताः अभवन् । ये सजीवं स्थितवन्तः ते पर्वतपरिसरे प्रवृत्तां घटनां विविधैः प्रकारैः वर्णयन्तः आसन् ।

राज्ञः एकान्तप्रकोष्ठे मन्त्री, नूतनः सेनापतिः, राजगुरुः च सम्मिलिताः आसन् । मन्त्रिसेनापत्योः कथनस्य अनन्तरं राजा राजगुरुं पश्यन् अवदत् - ''आर्य ! भवता सर्वं श्रुतम् एव । सैनिकानां कस्मिन् वचने विश्वासः करणीयः इत्येव न ज्ञायते मया । पर्वते सहस्रशः सैनिकाः उपस्थिताः सन्ति इत्यत्र विश्वासं करवाणि, उत रक्तसिक्तशरीरः, अग्निसमनेत्रः कश्चन घोरः मान्त्रिकः उपस्थितः इत्यत्र ? सः मान्त्रिकः अपारया मन्त्रशक्त्या युक्तः अस्ति, तडितम् एव उत्पादयितुम् अपि समर्थः सः, महापर्वतम् एव कम्पयितुम् अपि सामर्थ्यम् अस्ति तस्य, भूकम्पस्य उत्पादने अपि सः शक्तः इत्यादीनि वचनानि श्रूयन्ते बहुधा । कुत्र विश्वासः करणीयः इत्येव न ज्ञायते'' इति ।

राजगुरुः क्षणकालं विचिन्त्य अवदत् - ''उभयम् अपि भवितुम् अर्हति इति चिन्तनम् एव वरम् इति भाति'' इति ।

''मान्त्रिकस्य शत्रूणां च कः सम्बन्धः ? मान्त्रिकः शत्रुसैन्यस्य साहाय्यं करोति इति किम् अभिप्रैति भवान् ?'' इति अपृच्छत् राजा ।

''मया निश्चयरूपेण न उच्यते । अस्माकं सैनिकाः यदा पर्वतसमीपं गताः तदा तेषु बहवः मारिताः जाताः इति तु सत्यम् एव । किन्तु सैनिकाः बहुविधानि वचनानि वदन्ति । केचन

वदन्ति – तत्र सहस्त्रशः सैनिकाः दृष्टाः इति । मान्त्रिकः एव भूकम्पं सृष्टवान् इत्यपि वदन्ति ते । विचित्रजन्तोः सत्ताम् अपि ते कथयन्तः दृश्यन्ते'' इति उक्त्वा हसितवान् राजगुरुः ।

''तैः यादृशः विचित्रः जन्तुः वर्णितः तादृशस्य सत्तायां पूर्वं ममापि विश्वासः न आसीत् । किन्तु मान्त्रिकविषयः यदा श्रुतः तदा तु ....'' इति अवदत् मन्त्री ।

''मन्त्रिवर्य ! अहमपि मन्त्रतन्त्रादिकं किञ्चित्प्रमाणेन जानामि'' इति अवदत् राजगुरुः ।

''अतः एव खलु भवान् अत्र आनीतः ? भवतः साहाय्यं विना वयं किमपि कर्तुं न अर्हामः'' इति अवदत् राजा ।

''सैनिकाः तु ऊहया किमपि उक्तवन्तः सन्ति । तदाधारेण वयं किमपि निर्णेतुं न शक्नुमः । अतः वस्तुस्थितेः अवगमनाय समर्थाः अधिकारिणः प्रेषणीयाः । तदा वस्तुस्थितिः ज्ञायेत । तदनुगुणतया वयम् इतिकर्तव्यतां निर्णेतुं शक्नुयाम । त्वराकरणात् न किमपि प्रयोजनम् । अतः आदौ भवान् अङ्गरक्षकस्य नेतृत्वे कांश्चन सैनिकान् पर्वतप्रदेशं प्रति प्रेषयतु'' इति राजानम् उक्त्वा राजगुरुः ततः उत्थाय निर्गतवान् ।

राज्ञः आज्ञायाः अनुगुणम् अङ्गरक्षकः सैनिकैः सह निर्गतवान् – पर्वतपरिसरे के सन्ति इति ज्ञातुम् । आदौ ते पर्वतसमीपस्थम् अरण्यं गतवन्तः । तत्र सर्वत्र नीरवता प्रसृता आसीत् । न कोऽपि मनुष्यः तैः दृष्टः । तावदेव न, तत्र पशुपक्षिणां रवः अपि न श्रूयते स्म ।

भूकम्पकारणतः कम्पमानतां गतः पर्वतः



तेषां पुरतः आसीत् । शिलाखण्डानां राशेः कारणतः सः विलक्षणरूपं धृतवान् आसीत् । तस्य पर्वतस्य दर्शनात् सर्वे सैनिकाः नितरां भीताः जाताः ।

''भवत्सु कोऽपि किम् एतं पर्वतम् इतः पूर्वम् आरूढवान् ? अत्रत्यं समग्रं परिसरं पर्वतारोहणमार्गं च ज्ञातवान् यदि कोऽपि अस्मासु स्यात्, तर्हि अहो, महत् आनुकूल्यं सिद्धम् अभविष्यत् !'' इति अवदत् राज्ञः अङ्गरक्षकः चिन्तामिश्रितेन स्वरेण ।

तेषु सैनिकेषु कश्चित् वस्तुतः पर्वतारोहणमार्गं जानाति स्म । किन्तु शत्रुसैनिककथां, मान्त्रिकवार्तां, विचित्रजन्तुविषयं च श्रुत्वा सः नितरां भीतः आसीत् ।

''महोदय ! पर्वतारोहणं कृत्वा द्रष्टव्यं किं वा अस्ति तत्र ? यदि तत्र मान्त्रिकः



शत्रुसैनिकाः वा स्युः तर्हि वयं प्रतिगन्तुं, राजानं किमपि वक्तुं वा न शक्नुयाम एव । यतः तत्र गतं चेत् अस्माकं मरणं निश्चितम् । तत्र गमनाय प्रयासं कृत्वा अस्मदीयाः सैनिकाः इतः पूर्वम् एव मरणं प्राप्तवन्तः इत्येतत् स्मर्तव्यम् अस्माभिः । यदि तत्र कोऽपि न स्यात् तर्हि तत्र अगमनेनापि न कापि हानिः'' इति अवदत् सः सैनिकः ।

'वयम् इतः प्रतिगत्य पर्वतपरिसरे कोऽपि नास्ति इति यदि कथयेम तर्हि इष्टं सिद्धं भवेत् । किन्तु एते सैनिकाः सर्वे न हि विश्वासार्हाः । धनं प्राप्तुम् इच्छन्तः एतेषु कोऽपि यदि पर्वतस्य अनारोहणवार्तां महाराजं निवेदयेत् तर्हि कृतः सर्वः अपि प्रयासः व्यर्थः भवेत्' इति चिन्तितम् अङ्गरक्षकेण । एकत्र प्राणभीतिः, अपरत्र कर्तव्यपालनप्रीतिः । एकत्र राजाज्ञा, अपरत्र वस्तुस्थितेः भीकरता । अतः किं करणीयम् इत्यत्र द्वैधीभावः तस्य ।

'एवं व्यर्थचिन्तनेन अलम् । पर्वतम् आरुह्य वस्तुस्थितेः ज्ञानाय प्रयासः एव श्रेयसे । शत्रवः यदि अस्मान् मारयेयुः तर्हि अस्माभिः वीरगतिः प्राप्ता स्यात् । यदि सर्वं ज्ञात्वा प्रतिगन्तुं शक्नुयाम तर्हि राजा अस्मभ्यम् उत्तमं पुरस्कारं दद्यात् । तथापि, यदि मार्गं ज्ञातवान् कश्चित् प्राप्येत तर्हि वरम् अभविष्यत्' इति चिन्तयन् अङ्गरक्षकः पर्वतदिशि दृष्टिं प्रसारितवान् ।

अङ्गरक्षकः सैनिकाः च यस्य वृक्षस्य अधः स्थित्वा वार्तालापं कुर्वन्तः आसन् तस्यैव वृक्षस्य उपरि उपविष्टवान् आसीत् केशवस्य वृद्धपिता । पुत्रः विचित्रजन्तुम् आरुह्य यावत् निर्गतः ततः आरभ्य यद्यत् प्रवृत्तं तत्सर्वं दृष्टवान् आसीत् सः । गुहातः मान्त्रिकस्य आगमनं, पुत्रेण सह तेन कृतः वार्तालापः, ब्रह्मपुरतः आगतानां सैनिकानाम् आक्रमणं, पर्वतस्य कम्पनम् इत्यादिकं सर्वं दृष्टवान् आसीत् सः ।

वृद्धस्य मनसि विश्वासः जातः आसीत् यत् मम पुत्रः मान्त्रिकस्य जाले पतितः अस्ति इति । कथमपि पुत्रः रक्षणीयः इति चिन्तयति स्म सः । किन्तु तदर्थं तेन कोऽपि मार्गः न दृश्यते स्म । एकाकितया एतस्मिन् कार्ये प्रवृत्तिः अपायकरी इति सः जानाति स्म । 'मान्त्रिकस्य सम्मुखीकरणे मम शक्तिः कापि नास्ति । सः विचित्रः जन्तुः अपि न हि विश्वासार्हः । सः मान्त्रिकस्य शिष्यः एव स्यात् कदाचित् । मान्त्रिकस्य आदेशस्य

अनुसारम् एव सः केशवम् इतः नीतवान् अपि स्यात् । वस्तुस्थितिः स्यान्नाम या कापि । केशवस्य रक्षणाय मया पर्वतस्य उपरि गन्तव्यम् एव' इति सः निश्चितवान् ।

'पर्वतं प्रति गमनाय मार्गं ज्ञातवान् यदि कोऽपि लभ्येत तर्हि वरम् अभविष्यत्' इत्येतत् अङ्गरक्षक-सैनिकानां सम्भाषणं श्रुतवतः तस्य मनसि आशारेखा काचित् झटिति उदिता ।

सः मार्जारगत्या वृक्षात् अवतीर्य विना शब्दं गत्वा समीपस्थस्य वृक्षस्य अधः शयनम् अकरोत् । नेत्रे निमील्य सः स्वप्नवचनसदृशानि कानिचन वचनानि उदीरितवान् । अकस्मात् अनतिदूरात् एव एतादृशं वचनं श्रुत्वा अङ्गरक्षकः सैनिकाः च क्षणं यावत् भीताः । ते वृक्षस्य दिशि भीतिमिश्रितां दृष्टिं प्रसारितवन्तः । तैः तत्र कश्चन वृद्धः दृष्टः ।

''एषः प्रायः मान्त्रिकः स्यात् । तस्य दीर्घं श्मश्रु दृश्यताम् । निद्रावशं गतः स्यात् एषः इति भाति । इदानीम् एव एतस्य शिरः यदि कर्तितं स्यात् तर्हि कार्यं सिद्धम् इव'' इति अवदत् कश्चन सैनिकः ।

एतत् श्रुतवान् वृद्धः अवगतवान् यत् इतः परम् अपि शयनम् अपायाय एव स्यात् इति । अतः सः झटिति आयुधं गृहीत्वा उत्थितवान् । वृद्धस्य व्यवहारं दृष्ट्वा अङ्गरक्षकः अवगतवान् यत् एषः मान्त्रिकः न स्यात् इति ।

सः कोषात् खड्गं स्वीकृत्य चालयन् वृद्धस्य समीपं गत्वा अपृच्छत् - ''अये ! कः भवान् ? अत्र किं कार्यं भवतः ?'' इति ।

तावता कश्चन सैनिकः अग्रे आगत्य



अपृच्छत् - ''रे, किं भवान् शत्रुपक्षीयः सैनिकः ?'' इति ।

''श्रीमन् ! यथा भवता चिन्त्यते तथा नाहं सैनिकः, शत्रुपक्षीयः एव वा । एतस्मिन् अरण्ये निवसन् कन्दमूलादिभिः जीवनं निर्वहन् कश्चित् सामान्यः अस्मि अहम्'' इति अवदत् वृद्धः ।

''यदि भवतः वचनं सत्यं तर्हि भवतः प्राणानां न कोऽपि अपायः । अहं ब्रह्मपुरस्य राज्ञः अङ्गरक्षकः अस्मि । यदि कश्चित् शत्रुः अत्र स्यात् तर्हि सः संहरणीयः इति उद्देशेन अस्माभिः अत्र आगतम् । किं भवान् पर्वतारोहणमार्गं जानाति ?'' इति अपृच्छत् अङ्गरक्षकः ।

तदा वृद्धः अवदत् - ''एतस्य आयुधस्य चालनं यथा, तथैव पर्वतशिखरं प्रति गमनाय मार्गम् अपि अहं सम्यक् एव जानामि'' इति ।

''अहो, योग्ये समये प्राप्तः भवान् । अग्रे गच्छन् भवान् अस्मभ्यं मार्गं दर्शयतु । राजानम् उक्त्वा अहं भवते अपूर्वम् उपायनं दापयिष्यामि'' इति अवदत् अङ्गरक्षकः । वृद्धः तु प्रार्थनां विनैव एतस्मिन् कार्ये नितरां समुत्सुकः आसीत् । अतः सः प्रार्थनाश्रवण-समनन्तरम् एव झटिति उत्थाय पर्वतशिखरं प्रति गमनाय स्थितं मार्गम् अनुसृतवान् ।

किञ्चिद्दूरं यदा गतं तदा अङ्गरक्षकेण वृद्धस्य हस्ते स्थितम् आयुधं लक्षितम् । सः आश्चर्येण अपृच्छत् - ''कन्दमूलफलादिभिः जीवनं यापयतः भवतः हस्ते एषः खड्गः कथम् ?'' इति ।

''अहम् अपि पूर्वं ब्रह्मपुरस्य सैनिकः आसम् । तच्च न इदानीम्, अपि तु अद्यतनस्य राज्ञः पितुः काले । ततः आरभ्य एषः खड्गः मम हस्ते अस्ति'' इति अवदत् वृद्धः ।

एतत् श्रुत्वा सैनिकाः परस्परं सम्भाषणे मग्नाः जाताः । अङ्गरक्षकः तान् मन्दस्वरेण अवदत् - ''अस्माकं प्राणानां न कोऽपि अपायः । मम तु तस्मिन् विश्वासः आसीत् । अतः एव मार्गस्य ज्ञापनाय सः सूचितः । यदि सः अस्माकं वञ्चनाय प्रयासं कुर्यात् तर्हि तस्य शिरः भूमौ पतेत्'' इति ।

वृद्धः एतत् वचनं श्रुतवान् एव । तथापि अश्रुतवान् इव व्यवहरन् पर्वतशिखरस्य दिशि पदानि स्थापितवान् सः । -*(अनुवर्तते)*



# वेताल-कथा

# शरनिधेः फलत्यागः

अङ्गीकृतं कार्यं परित्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्, शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगत्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् – ''अये राजन् ! मध्यरात्रः अयम् । घोरः श्मशानमार्गः एषः । तथापि भवान् तु निर्भयतया गच्छन् अस्ति । श्रमः नाम्ना अपि न ज्ञायते भवता । किन्तु मम प्रश्नः – किम् एषः भवतः परिश्रमः सफलः भवेत् इति । केचन स्वस्य परिश्रमस्य व्यर्थतां कदाचिदपि न परिगणयन्ति एव । पूर्वं शरनिधिः नाम चतुरङ्ग-प्रियः राजा कश्चन आसीत् । कदाचित् चतुरङ्गक्रीडायां गन्धर्वं



कश्चित् पराजित्य यौवनप्राप्त्यवकाशं प्राप्य अपि तम् अवसरं परित्यक्तवान् सः । भवति विवेकस्य जागरणाय, भवतः मार्गायासस्य परिहाराय च तदीयां कथां विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं बेतालेन कथा आरब्धा –

शरनिधिः मधुवनं पालयति स्म । चतुरङ्ग-क्रीडायां महती आसक्तिः तस्य । राजधान्यां प्रतिवर्षं चतुरङ्गस्पर्धा आयोज्यते स्म तेन । तस्य पत्नी प्रभावती, पुत्र्यौ वैजयन्ती मेघना चापि चतुरङ्गे विशेषप्रीतिं वहतः स्म ।

कस्याञ्चित् पूर्णिमायां रात्रौ वैजयन्ती मेघना च उद्याने उपविश्य चतुरङ्गक्रीडायां मग्ने आस्ताम् । तदवसरे आकाशे सञ्चरन् समीरः नाम गन्धर्वः एतत् दृश्यम् अपश्यत् । एतया क्रीडया आकृष्टः सः रथम् अस्थगयत् । तावता वैजयन्ती क्रीडायां जयं प्राप्तवती । ताम् अभिनन्दन् – ''अपूर्वं क्रीडनकौशलं भवत्याः'' इति वदन् तस्याः समीप् आगतवान् समीरः ।

अकस्मात् पुरतः स्थितं गन्धर्वं दृष्ट्वा ते सोदर्यौ नितरां भीते । आश्चर्यं कथमपि निगृह्य वैजयन्ती तम् अवदत् – ''एतस्मिन् उद्याने कस्यापि पुरुषस्य प्रवेशः सर्वथा निषिद्धः । विशेषरक्षणव्यवस्था अपि अस्ति अत्र । तथापि भवान् कथम् अन्तः आगन्तुं समर्थः जातः ?'' इति ।

''मम नाम समीरः इति । अहं कश्चन गन्धर्वः अस्मि । चतुरङ्गे मम विशेषरुचिः । कौमुद्याम् आकाशे विहरन् भवत्योः क्रीडनं दृष्ट्वा आकृष्टः सन् अहं भूमिम् आगतवान् । यदि आपत्तिः न स्यात् तर्हि भवत्योः अन्यतरया सह अहं चतुरङ्गं क्रीडितुम् इच्छामि'' इति अवदत् गन्धर्वः ।

शिरश्चालनपूर्वकं स्वस्य सम्मतिं सूचितवती वैजयन्ती । ततः क्रीडनम् आरब्धम् । अल्पे एव काले वैजयन्ती पराजयं प्राप्नोत् । ततः गन्धर्वः मेघनां पश्यन् अपृच्छत् – ''किं भवती अपि क्रीडितुम् इच्छति ?'' इति ।

मम पराजयः निश्चितः इति मेघना यद्यपि जानाति स्म, तथापि सा क्रीडने उत्साहं प्रकटितवती । यतः गन्धर्वेण सह क्रीडनाय अवसरः विरलतया एव प्राप्यते इति सा जानाति स्म । अविस्मरणीयम् एतम् अवसरं परित्यक्तुं न इच्छति स्म सा ।

क्रीडनम् आरब्धम् । मेघना अवधानपूर्वकं क्रीडति स्म । तथापि अल्पे एव काले सा

पराजयं प्राप्तवती एव । तां पराजित्य गन्धर्वः उच्चैः हसितवान् – मां पराजेतुं कोऽपि न शक्नोति इति भावं प्रदर्शयन् ।

''अग्रिमायां पूर्णिमायाम् एतस्मिन् एव समये अहं पुनः आगमिष्यामि । पुनरपि तदा क्रिडाम'' इति उक्त्वा रथम् आरुह्य ततः निर्गतवान् सः ।

विलम्बेन आगते पुत्र्यौ उद्दिश्य महाराज्ञी अपृच्छत् – ''किमर्थम् एतावान् विलम्बः ? किम् एतावत्पर्यन्तम् अपि उद्याने चतुरङ्गक्रीडा एव प्रचलति स्म ?'' इति ।

''आम् । अद्य कश्चन गन्धर्वः आगत्य आवाभ्यां सह क्रीडितवान्'' इति अवदत् मेघना ।

आश्चर्यं प्रकटयन्ती महाराज्ञी वैजयन्तीम् अपृच्छत् – ''किम् एतत् सत्यम् ?'' इति ।

''आम् अम्ब ! मेघनया यत् उक्तं तत् सत्यम् एव । अग्रिमायां पूर्णिमायां पुनः आगत्य क्रीडिष्यामि इति उक्त्वा गतवान् अस्ति सः'' इति अवदत् वैजयन्ती मातुः सन्देहं निवारयन्ती ।

अत्रान्तरे राजा शरनिधिः तत्र आगतः । सः राज्ञीमुखात् सर्वं वृत्तान्तं श्रुतवान् । सोऽपि आश्चर्यं प्रकटयन् अपृच्छत् – ''पुनः अपि आगमिष्यामि इति गन्धर्वः किं निश्चयेनापि उक्तवान् ?'' इति ।

अङ्गीकारभावं प्रदर्शयन्ती शिरः चालितवती वैजयन्ती ।

अनन्तरपूर्णिमादिने वैजयन्ती मेघना च चन्द्रशालायाः उपरि उपविष्टवत्यौ । राजा राज्ञी च समीपस्थस्य लताकुञ्जस्य पृष्ठतः स्थितवन्तौ । सर्वे गन्धर्वस्य आगमनं प्रतीक्षमाणाः आसन् ।



अल्पे एव काले गन्धर्वः उद्याने अवतीर्णः रथात् । लताकुञ्जस्य दिशि दृष्टिं प्रसारयन् सः उक्तवान् – ''शरनिधिवर्य ! महाराज्ञया सह लताकुञ्जस्य पृष्ठतः स्थित्या किम् ? तस्य का वा आवश्यकता ? यदि भवतः सम्मतिः स्यात् तर्हि आवां चतुरङ्गं क्रीडाव । किं भवता एतत् सम्मन्यते ?'' इति ।

गन्धर्वस्य निमन्त्रणं प्राप्य नितरां सन्तुष्टः शरनिधिः क्रीडनाय सन्नद्धः जातः । राजा गन्धर्वः च परस्परम् अभिमुखम् उपविष्टवन्तौ । प्रभावती, वैजयन्ती, मेघना च पार्श्वे उपविष्टवत्यः ।

''स्पर्धायां पणः कोऽपि अस्ति चेदेव क्रीडायां रुचिः वर्धते । एतद्विषये भवतः आशयः कः ?'' इति अपृच्छत् गन्धर्वः ।



''पणः कीदृशः भवतु इति भवान् एव वदतु'' इति गाम्भीर्येण अवदत् राजा ।

तदा गन्धर्वः अवदत् - ''यदि अहं पराजयं प्राप्नुयां तर्हि मम गन्धर्वत्वबलात् भवन्तं पुनरपि युवकं करिष्यामि । यदि अहं जयं प्राप्तवान् स्यां तर्हि भवतः पुत्र्योः अन्यतरा मह्यं दातव्या भवता । किम् एतत् अनुमन्यते भवता ?'' इति ।

राजा चिन्तने मग्नः । 'यदि मम पराजयः भवेत् तर्हि गन्धर्वः मम जामाता भवेत् । यदि गन्धर्वः पराजयं प्राप्नुयात् तर्हि वार्धक्ये स्थितेन मया तारुण्यं प्राप्येत । जयः पराजयश्चापि मम लाभाय एव' इति चिन्तयन् राजा सन्तुष्टः जातः ।

राजकुमार्यौ अपि चिन्तयन्त्यौ आस्तां - 'यदि गन्धर्वस्य जयः भवेत् तर्हि आवयोः कतरा गन्धर्वाय दीयेत ?' इति । राज्ञी चिन्तयन्ती आसीत् - 'यदि गन्धर्वस्य पराजयः भवेत् तर्हि राजा पुनरपि तारुण्यं प्राप्नुयात् । तदा मम गतिः का भवेत् ? यदि सः काञ्चित् तरुणीं परिणयेत् तर्हि मया किं करणीयम् ?' इति ।

एतदवसरे एव काचित् घटना घटिता । आकाशात् अपरः कश्चन रथः अवतीर्णः । सर्वे महता आश्चर्येण तं रथं पश्यन्तः स्थितवन्तः । तावता तस्मात् रथात् काचित् सुन्दरी अवतीर्य आगता ।

राजा शरनिधिः तां नखशिखान्तं दृष्ट्वा आश्चर्यपूर्णेन स्वरेण अपृच्छत् - ''आर्ये ! भवती का इति किम् अहं ज्ञातुं शक्नुयाम् ?'' इति ।

''अहम् एतस्य गन्धर्वस्य पत्नी । एषः यां सुन्दरीं परिणेतुम् इच्छति सा का इति ज्ञातुम् अहम् आगता अस्मि'' इति उपहासमिश्रितेन स्वरेण अवदत् सा ।

ततः राजा किमपि निर्णीय अवदत् - ''क्रीडायाः आरम्भः भवतु । किन्तु अत्र कश्चन नियमः पालनीयः अस्ति । क्रीडायां जयः पराजयः वा कस्यचित् भवितुम् अर्हति । तथापि कोऽपि मम कुटुम्बस्य हानिं न कुर्यात् । किम् एषः नियमः अनुमन्येत ?'' इति ।

गन्धर्वः सकृत् पत्नीं दृष्ट्वा शरनिधिम् अवदत् - ''मत्पक्षतः भवत्कुटुम्बस्य कापि हानिः न भविष्यति इति अहं प्रतिजाने'' इति ।

क्रीडा आरब्धा । गन्धर्वः तदा तदा पत्नीं कटाक्षेण पश्यति स्म । गन्धर्वस्य पत्नी परोक्षतया शरनिधेः साहाय्यं कृतवती । अतः

गन्धर्वस्य पराजयः जातः ।

खिन्नेन गन्धर्वेण शरनिधये यौवनप्रदानाय मन्त्रोच्चारणं यदा आरब्धं तदा राजा अवदत् - ''मह्यं यौवनं न आवश्यकम्'' इति ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! शरनिधेः व्यवहारे सन्दिग्धता चपलता च दृश्यते खलु ? चतुरङ्गक्रीडायां जये पराजये वा प्राप्ते अपि राज्ञः एव लाभः यथा भवेत् तथा आश्वासनं दत्तवान् आसीत् गन्धर्वः । एतत् तु शरनिधेः सौभाग्यम् । किन्तु क्रीडायां जयं प्राप्य अपि सः यौवनप्राप्तिं निराकृतवान् । एवं किमर्थम् ? किं तेन मूर्खता न आचरिता ? तेन यदि पराजयः स्वयं प्राप्तः स्यात् तर्हि गन्धर्वः एव जामातृत्वेन प्राप्तः अभविष्यत् । जयस्य फलम् अनिच्छता पराजयः अपि न अङ्गीकृतः । किमर्थं तेन जयस्य पराजयस्य च फलं निराकृतं, यच्च सर्वथा लाभकरमेव आसीत् ? मम एतेषां प्रश्नानाम् उत्तरं जानन्नपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः राजा अवदत् - ''आदौ शरनिधिः मानवसहजया बलहीनतया ग्रस्तः आसीत् । जयः पराजयः चापि लाभाय एव इति सन्तोषः आसीत् तस्य । किन्तु क्रीडारम्भतः पूर्वम् आगता गन्धर्वपत्नी गन्धर्वस्य मनसः इच्छां प्रकटितवती । पराजयस्य फलरूपेण गन्धर्वाय पुत्र्याः दानात् कीदृशं फलं प्राप्येत इति शरनिधिना ततः ज्ञातम् । यौवनस्य पुनःप्राप्त्या जायमानान् परिणामान् अपि सः अचिन्तयत् । यदि तेन यौवनं प्राप्येत तर्हि प्राप्तवयस्के पुत्र्यौ तं पितृत्वेन निर्देष्टुं सङ्कोचम् अनुभूतवत्यौ स्याताम्, मध्यवयस्का राज्ञी पतिं तरुणं प्राप्य उपहासपात्रतां गता अभविष्यत् । एवं जयस्य पराजयस्य वा फलं हितकरं तु न अभविष्यत् । एतत् सर्वं परामृश्य राजा शरनिधिः निर्णीतवान् यत् उभयोः अपि फलं तिरस्करणीयम् इति । अतः राज्ञः व्यवहारे सन्दिग्धता मूर्खता वा न दृश्यते । प्रत्युत तस्य बुद्धिमत्ता एव दृश्यते'' इति ।

एवं वदता त्रिविक्रमेण मौनस्य भङ्गः कृतः आसीत् । अतः एव शवान्तर्गतः वेतालः मौनेन ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।






# अस्माकं राष्ट्रियः पक्षी

मयूरः भारतदेशे प्रायः सर्वत्र दृश्यते । क्रि.पू. ३२६ तमे वर्षे चक्रवर्ती अलेक्साण्डरः यदा आक्रमणाय भारतम् आगतवान् तदा सः मयूराणां सौन्दर्यं दृष्ट्वा नितरां व्यामुग्धः सन् 'प्रतिगमनसमये केचन मयूराः नेतव्याः' इति निर्णीतवान् आसीत् इति श्रूयते ।

संस्कृतभाषायां मयूरस्य पर्यायपदम् अस्ति 'बर्ही' इति । एतस्य बर्हे नेत्ररूपाः आकाराः बहवः भवन्ति इत्यतः एतादृशं नाम तस्य । दीर्घः नीलः कण्ठः, व्यजनसदृशं पुच्छं, रमणीया शिखा इत्यादिभिः युक्तः मयूरः पक्षिजातिषु एव सुन्दरतमः ।

मयूरस्य पुच्छं दीर्घं भवति । पुच्छे पिञ्छाः भवन्ति बहवः । प्रतिपिञ्छम् 'चन्द्रक'नामकं नेत्राकारकम् अर्धचन्द्राकारकं वा चिह्नं भवति । यदा सः पुच्छं प्रसारयति तदा सहस्रनेत्र-युक्तताभ्रमः जायते । प्रतिवर्षं मयूरस्य पुच्छस्य पिञ्छाः पतन्ति, नूतनाः उत्पद्यन्ते च । तान् सङ्गृह्य रमणीयानि व्यजनानि निर्मीयन्ते ।

चक्रवर्तिना शाहजहानेन निर्मितं मयूर-सिंहासनं तु जगति प्रसिद्धम् । एतस्मिन् मयूरपिञ्छाः योजिताः सन्ति । पर्शियादेशीयः (अद्य तस्य देशस्य नाम इरान् इति) आक्रामकः नादिरशाहः अमूल्यम् एतत् मयूरसिंहासनं स्वस्य देशं प्रति नीतवान् । भगवान् श्रीकृष्णः स्वस्य शिखायां मयूरपिञ्छं धरति । भगवतः शिवस्य पुत्रस्य कार्त्तिकेयस्य वाहनम् अपि मयूरः एव ।



# कृपणः धनिकः, तदीया छुरिका च

गिरिधारिलालः कालीवनग्रामस्य भूस्वामी । महती सम्पत्तिः, अपारा भूमिः च अस्ति तस्य । किन्तु महाकृपणः सः । कृषिभूमेः निर्वहणाय तेन बहवः कर्मकराः इष्यन्ते एव । सः तेभ्यः वेतनदानावसरे महत् दुःखम् अनुभवति । अतः कमपि व्याजं कथयन् सः भृतिदानं निवारयति, अल्पम् एव ददाति वा ।

अन्यत्रापि उद्योगप्राप्तिः क्लेशाय एव इत्यतः वराकाः कर्मकराः तस्य गृहे कार्यं कुर्वन्ति स्म । भृतिः सम्यक् न प्राप्यते चेदपि विरोधं न आचरन्ति स्म ते । कृपणः सः श्रेष्ठी पर्वदिने कर्मकरान् गृहम् आहूय भृतेः कश्चित् भागं यच्छति स्म । एकं दिनं वा गृहे पूर्णोदरं भोजनं भवति इत्यतः ते कर्मकराः सन्तुष्टाः भवन्ति स्म । कदाचित् वा प्राप्तव्यं धनं प्राप्येत इति तेषाम् आशा ।



गिरिधारिलालस्य गृहे याः गावः आसन् ताः कृशकायाः, वृद्धाः, क्षीरदाने असमर्थाः च सन्ति इदानीम् । अतः गृहे यत् क्षीरं प्राप्यते तत् अपर्याप्तं भवति स्म । गिरिधारिलालः अचिन्तयत् यत् नगरं गत्वा उत्तमा बहुक्षीरदा गौः क्रेतव्या इति ।

विपणिं गतः सः उत्तमं धेनुद्वयं चितवान् । मूल्यविषये चर्चा अपि कृता । अपेक्षितेन मूल्येन धेनुद्वयं दातुं सिद्धः अपि अभवत् विक्रेता ।

तावता श्रेष्ठिना स्मृतं यत् धनस्यूतः गृहे एव परित्यक्तः इति । सकृत् तस्य मनः मुकुलितं जातम् । 'चर्चां कृत्वा मूल्यनिश्चयः



छुरिकां स्वीकृत्य ऋणस्य दानम् अङ्गीकृतवान् सः कुसीदवणिक् । 'सप्ताहाभ्यन्तरे प्रत्यागत्य धनं प्रत्यर्प्य एतां छुरिकां नेष्यामि' इति उक्त्वा गिरिधारिलालः धनं स्वीकृत्य ततः निर्गतवान् ।

धेनुद्वयं क्रीत्वा कस्यचित् तरुणस्य साहाय्यं प्राप्य तत् उभयं गृहं नीतवान् सः । भोजनमात्रदानम् अपि अङ्गी-कृत्य साहाय्यं कर्तुं सज्जः आसीत् सः तरुणः ।

ततः सप्ताहः अतीतः चेदपि गिरिधारिलालः धनं प्रत्यर्पयितुं न आगतः एव ।

कृतः अस्ति । 'श्वः धनं दास्यते' इति उक्तं चेत् धेनुविक्रेता न अङ्गीकुर्यात् । अन्यत्र गत्वा सः धेन्वोः विक्रयणं चिन्तयेत् एव । अतः अद्य नगरे एव कथमपि धनं प्राप्तव्यम् । अन्यथा धेनुद्वयं क्रेतुं न शक्येत' इति अचिन्तयत् सः ।

ततः सः ऋणदातुः अन्वेषणाय ततः गतः । अनतिदूरे एव कश्चन कुसीदवणिक् तेन दृष्टः । सः तस्य समीपं गतवान् ।

सः कुसीदवणिक् अवदत् यत् कस्यचित् प्रतिभूत्वं दातव्यं, न्यासरूपेण किमपि स्थापनीयं वा इति ।

गिरिधारिलालस्य समीपे सुवर्णत्सरुयुक्ता छुरिका काचित् आसीत् । पितामहेन दत्ता आसीत् सा । प्रयाणसमये सर्वदा सः ताम् आत्मना सह नयति स्म आत्मरक्षणाय । तां

अपरः सप्ताहः अतीतः । मासः अपि अतीतः । अन्यः मासः अपि अतीतः । किन्तु श्रेष्ठिनः दर्शनं तु नास्ति ।

कुसीदवणिक् तां छुरिकां हस्तेन गृहीत्वा अचिन्तयत् - 'एतां स्वीकृत्य मया किं वा करणीयम् ? एतस्याः विक्रयणतः मया कियत् धनं प्राप्येत ? मत्तः एतां छुरिकां को वा क्रीणीयात् ? एतस्याः विक्रयणाय प्रयासः कृतः चेत् जनाः माम् उपहसेयुः अपि' इति । अतः सः छुरिकायाः विक्रयणविचारम् एव परित्यक्तवान् ।

सः कञ्चित् सेवकं कालीवनग्रामं प्रति प्रेषितवान् । सः सेवकः दिनद्वयं यावत् तत्र अतिष्ठत् । तथापि तेन गिरिधारिलालस्य दर्शनम् एव न प्राप्तम् । अतः सः निराशतया प्रत्यागतः ।

केषाञ्चित् दिनानाम् अनन्तरं कुसीदवणिक् अपरं सेवकं श्रेष्ठिगृहं प्रति प्रेषितवान् । अस्वास्थ्यव्याजं कथयन् श्रेष्ठी एतदवसरे अपि दर्शनदानं निराकृतवान् । 'अचिरात् एव आगत्य धनं प्रत्यर्प्य छुरिकां नेष्यामि' इति वार्तां सेवकद्वारा प्रेषितवान् गिरिधारिलालः । कुसीदवणिक् अनन्यगतिकतया एतस्मिन् वचने विश्वासं कुर्वन् कानिचन दिनानि प्रतीक्षितवान् । तथापि किमपि प्रयोजनं न सिद्धम् । 'धनप्राप्त्यर्थम् अन्यः एव उपायः चिन्तनीयः' इति निश्चितवान् सः ।

कुसीदवणिजः क्षौरिकस्य नाम सुखरामः इति । सुखरामः यदा क्षौरार्थम् आगतः तदा कुसीदवणिक् गिरिधारिलालस्य धनस्वीकारं, छुरिकायाः न्यासीकरणादिकं च निवेद्य अवदत् – ''द्वित्राः मासाः अतीताः चेदपि गिरिधारिलालः छुरिकां नेतुं न आगतः । दौर्भाग्यवशात् सा छुरिका इदानीं विनष्टा अस्ति । तथापि कापि चिन्ता नास्ति मम । धनिकः तु धनं न प्रत्यर्पयेत् एव । अतः छुरिकाप्रत्यर्पणस्य प्रसङ्गः अपि दूरापास्तः'' इति ।

क्षौरिकाः जनात् जनं, ग्रामात् ग्रामं च वार्तायाः प्रापणे निपुणाः भवन्ति इति कुसीदवणिक् जानाति स्म । तत्रापि लुण्ठनहननवञ्चन-चौर्यादिवार्ताः अत्यल्पे एव काले प्रसृताः भवन्ति ।

कुसीदवणिजा यथा चिन्तितं तथा एव प्रवृत्तम् । गिरिधारिलालस्य गृहं प्रति केशकर्तनार्थं गतः सुखरामः आत्मना कुसीदवणिजः गृहे श्रुतां वार्ताम् उत्साहेन गिरिधारिलालम् अश्रावयत् । एतस्य श्रवणात् गिरिधारिलालः नितरां सन्तुष्टः जातः ।

सः अचिन्तयत् – 'एतावता एषा वार्ता ग्रामजनैः बहुभिः ज्ञाता स्यात् एव । कुसीदवणिक् न्यासरूपेण स्थापितायाः सुवर्णच्छुरिकायाः प्रत्यर्पणे असमर्थः अस्ति इदानीम् इत्येतत् अपि तैः अवगतं स्यादेव । अतः मया बहुभिः ग्रामीणैः सह सम्भूय कुसीदवणिजः गृहं प्रति गन्तव्यम् । छुरिका प्रत्यर्पणीया इति वक्तव्यं च । गमनसमये धनम् अपि नेतव्यं, येन धनप्रत्यर्पणं मया चिन्तितम् इत्येतत् प्रमाणितं स्यात् । स तु छुरिकां प्रत्यर्पयितुं नार्हति । तदा मया धनं प्रत्यर्पणीयम् अपि न भविष्यति । विना क्लेशं व्यवहारः



मदनुकूलः भविष्यति' इति ।

अतः अनन्तरदिने एव बहुभिः सह सः कुसीदवणिजः गृहम् अगच्छत् । कुसीदवणिक् स्वस्य असहायकतां प्रदर्शयन् छुरिकायाः अदर्शनवार्ताम् अश्रावयत् ।

''मया भवत्समीपे न्यासरूपेण छुरिका स्थापिता इति केन वा चोरेण ज्ञातं स्यात् ? अन्यच्च छुरिकामात्रम् एव कथं वा चोरितं भवेत् ? सा गृहे एव कुत्रचित् स्यादपि । किं भवता गृहे सर्वत्र अन्विष्टम् ? पुनरपि प्रयत्नं करोतु तावत्'' इति उच्चस्वरेण अवदत् गिरिधारिलालः ।

'मम उच्चं स्वरं श्रुत्वा जनाः सम्मिलिताः भवन्ति । जनानां पुरतः एषः कुसीदवणिक् असहायकतां प्रदर्शयिष्यति । छुरिका न प्रत्यर्प्यते इत्यतः एषः व्यवहारः समाप्तः भविष्यति' इति चिन्तनम् आसीत् गिरिधारिलालस्य । अतः तस्य मुखे मन्दहासः विलसति स्म ।

म्लानमुखः सन् एव कुसीदवणिक् पुनरपि गृहस्य अन्तः गतवान् । गिरिधारिलालश्च स्वस्य धनस्यूतं पुनः पुनः स्पृशन् एव इतस्ततः पश्यति स्म । 'एतेन धनप्रत्यर्पणाय अहं सज्जः अस्मि इति जनाः भावयन्ति' इति तस्य चिन्तनम् आसीत् ।

किञ्चित्कालानन्तरं कुसीदवणिक् गृहात् बहिः आगत्य - ''श्रेष्ठिवर्य ! भवतः छुरिका प्राप्ता मया । मया कुत्रचित् सुरक्षिततया स्थापिता आसीत् सा । तत् स्थलं च विस्मृतम् आसीत् । इदानीं सौभाग्यवशात् सा प्राप्ता



मया । कृपया स्वीकरोतु एताम् । ऋणधनं च प्रत्यर्पयतु । दीर्घकालात् अनुवर्तमानः एषः व्यवहारः अद्य समाप्तिं गच्छतु'' इति अवदत् ।

एतत्सर्वं जनानां पुरतः एव प्रवृत्तम् आसीत् । अतः गिरिधारिलालेन अनन्यगतिकतया ऋणं सवृद्धि प्रत्यर्पणीयम् एव अभवत् । अतः तस्य मुखं विच्छायं जातम् । सः कुसीदवणिजे धनं दत्त्वा विना प्रतिवचनं शिरः अवनमय्य वेगेन ततः निर्गतवान् ।

एतदनन्तरं गिरिधारिलालस्य कृपणता अपि सर्वथा न्यूना जाता । तदीयाः कर्मकराः ततः आरभ्य प्रतिमासं नियततया भृतिं प्राप्तवन्तः ।



# वाणिज्यस्य रहस्यम्

कमलापुरं किञ्चन लघुनगरम् । रमाकान्तः तत्र सुवर्णाभरणवाणिज्यं करोति स्म । यदा सः आकस्मिकं मरणं प्राप्तवान् तदा तदीयः पुत्रः रङ्गनाथः सुवर्णवाणिज्यस्य उत्तराधिकारी जातः । तस्मिन् वाणिज्ये तस्य अभिरुचिः न आसीत् । अतः वाणिज्य-व्यवहारे विशेषास्थां न दर्शितवान् सः । सदा विनोदे, मनोरञ्जकेषु कार्यक्रमेषु, खादने च मग्नः भवति स्म सः । आये व्यये वा तस्य अवधानं न आसीत् ।

कदाचित् रङ्गनाथः उद्याने इतस्ततः सञ्चरन् आसीत् । तदा आभरणविभागस्य प्रमुखः अवधानी तत्समीपम् आगत्य अवदत् - ''श्रीमन् । अन्यप्रदेशीयः कश्चन वणिक् एतस्मिन् नगरे सुवर्णाभरणापणम् आरभते इति श्रुतम् । एतद्विषये किमपि करणीयम् । स्पर्धां सम्मुखीकृत्य अस्माभिः कथं वाणिज्यं विस्तारयितुं शक्येत इति चिन्तनं करणीयम् । सम्भाव्या हानिः कथमपि निवारणीया एव'' इति ।

तदा रङ्गनाथः उच्चैः हसन् अवदत् - ''अस्माकं समीपे कुशलाः स्वर्णकाराः बहवः सन्ति । अस्माभिः निर्मितानि आभरणानि क्रेतुं जनाः अहमहमिकया आगच्छन्ति अपि । अतः नूतनस्य आपणस्य विषये कापि चिन्ता न करणीया । अस्माकं कोऽपि क्लेशः न भविष्यति'' इति ।

ततः मासाभ्यन्तरे नूतनः वणिक् तस्मिन् नगरे आपणम् आरब्धवान् । अनन्तरं द्वित्र-मासाभ्यन्तरे तस्य आपणस्य ख्यातिः प्रवृद्धा । अधिकङ्क्षया गत्वा जनाः तस्मात् आपणात् आभरणानि क्रीतवन्तः । अतः रङ्गनाथस्य आयः सर्वथा क्षीणः जातः । कर्मकरेभ्यः मासिकं वेतनं दातुम् अपि तत्समीपे धनं न आसीत् ।

'यत्र आदरः न्यूनः तस्मिन् नगरे वासात्



किमपि प्रयोजनं नास्ति' इति विचिन्त्य सः कदाचित् पत्नीपुत्रादीन् अपि अनुक्त्वा रात्रौ गृहात् निर्गतवान् । कुत्र गन्तव्यम् इति तु सः एव न जानाति स्म । निरन्तरं गतवान् सः । अनन्तरदिने प्रातःकाले श्रान्तिनिवारणाय सः कस्यचित् वृक्षस्य अधः उपाविशत्, नेत्रे न्यमीलयत् च ।

तदवसरे एव भूस्वामी सूर्यभूपतिः क्षेत्रादिकं परिशील्य प्रत्यागच्छन् आसीत् । सः वृक्षस्य अधः शयानं रङ्गनाथं दृष्ट्वा अचिन्तयत् - 'सामान्यदर्शनात् एव भासते यत् एषः उच्चे कुले जन्म प्राप्तवान् इति । किमपि अस्वास्थ्यम् एतं बाधते इति भाति' इति । अतः सेवकान् आदिष्टवान् यत् एतं मम अतिथिगृहं प्रति नयन्तु इति ।

सेवकाः रङ्गनाथं कुलगोत्रादिकं पृष्टवन्तः । महत्याः श्रान्तेः कारणतः रङ्गनाथः स्पष्टतया किमपि न उक्तवान् । सेवकाः तं वृषभशकटे उपवेश्य अतिथिगृहं नीतवन्तः । स्नान-भोजनादिनिमित्तं योग्या व्यवस्था अपि कृता । किन्तु रङ्गनाथः तु स्वस्य नाम ग्रामादिकं वा न उक्तवान् एव ।

तस्यां रात्रौ लुण्ठाकानां कश्चन गणः भू-स्वामिनः गृहं प्रवेष्टुं प्रयासम् अकरोत् । रक्षकाणाम् उच्चध्वनिं श्रुत्वा भूस्वामी सेवकाः च जागरिताः जाताः । भूस्वामी खड्गशुल-बाणवारादीनि रक्षणायुधानि सेवकेभ्यः दत्त्वा लुण्ठाकानां सम्मुखीकरणाय स्वयं प्रस्थित-वान् ।

पञ्चदशनिमेषाभ्यन्तरे लुण्ठाकाः अवगत-

वन्तः यत् अत्र अस्माकं जयः न शक्यः इति । तेषु केचन व्रणिताः अपि जाताः । अतः ते युद्धं परित्यज्य पलायितवन्तः ।

अतिथिगृहस्य पुरतः स्थित्वा रङ्गनाथः एतत्सर्वं पश्यन् एव आसीत् । एतां घटनां भूस्वामिनः व्यवहारं च दृष्ट्वा सः महत् आश्चर्यम् अनुभूतवान् ।

अनन्तरदिने प्रातः भूस्वामिनः समीपं गत्वा सः तं नमस्कृत्य अवदत् – ''महोदय ! भवतः भवने सेवकाः बहवः सन्ति एव । तथापि चोराणां सम्मुखीकरणाय भवता स्वयं किमर्थं गतम् ? अपायबहुले एतादृशे कार्ये सेवकाः एव प्रेषणीयाः, न तु स्वयं गन्तव्यम् । भवतः स्तरस्य अनुगुणः नास्ति एषः व्यवहारः'' इति ।

तदा भूस्वामी हसन् अवदत् – ''सेवकाः बहवः सन्ति इति चिन्तयित्वा लुण्ठाकानां सम्मुखीकरणाय अगमनं न उचितम् । सर्वेषु अपि कार्येषु अस्माभिः सहस्थितिः दर्शिता चेत् एव कर्मकरेषु धैर्यं प्रीतिः च उत्पद्यते'' इति ।

भूस्वामिनः उत्तरस्य श्रवणात् रङ्गनाथेन आत्मनः दोषः ज्ञातः – सुवर्णवाणिज्ये या असावधानता दर्शिता तस्याः कारणतः एव मया हानिः अनुभूता इति ।

'कर्मकरेषु एव सर्वस्य वाणिज्यस्य भारस्य अर्पणं न उचितम्' इति ज्ञात्वा सः भूस्वामिनं स्वस्य नाम-परिचयादिकं निवेद्य अवदत् – ''महाशय ! अद्य भवतः कारणतः मया वाणिज्यस्य रहस्यं ज्ञातम् । सफलजीवनस्य अपि एतदेव रहस्यम् इति चिन्तयामि अहम् । इतः गमनाय कृपया अनुज्ञा देया भवता'' इति ।

एतानि वचनानि श्रुत्वा भूस्वामी नितरां सन्तुष्टः । सः रङ्गनाथाय किञ्चित् धनम् आभरणानि च दत्त्वा तं प्रेषितवान् । तस्य रक्षणाय कांश्चन सेवकान् अपि प्रेषितवान् सः ।

रङ्गनाथः कमलापुरं प्रत्यागतः । भूस्वामिना दत्तं धनम् उपयुज्य सः पुनरपि वाणिज्यम् आरब्धवान् । अल्पे एव काले 'दक्षः वणिक्' इति ख्यातिः अपि प्राप्ता तेन ।

जनाः तम् उद्दिश्य अवदन् यत् पिता इव एषः अपि समर्थः एव वणिक् इति ।



# महिमान्विता शिला

सवितृपुरे सोमः नन्दः चेति उभौ सुहृदौ निवसतः स्म । नन्दः विवेकी । सदा विचिन्त्य प्रवर्तते सः । किन्तु सोमः न तथा । त्वराशीलः सः विना श्रमं यत् प्राप्येत तद्विषये आसक्तः ।

कदाचित् तौ उद्योगान्वेषणाय राजधानीं प्रति प्रस्थितवन्तौ । मध्येमार्गं ताभ्याम् आतपकारणतः मूर्च्छां गतः कश्चन संन्यासी दृष्टः । उभौ अपि तस्मिन् दयां प्राप्य कासारतः जलम् आनीय प्रथमोपचारं कृतवन्तौ । सचेतनतां गताय तस्मै पानाय जलम् अपि ताभ्यां दत्तम् ।

एतस्मात् सन्तुष्टः सः संन्यासी तयोः नामधामादिकं ज्ञात्वा अवदत् - ''वत्सौ ! भवन्तौ सद्गुणसम्पन्नौ । अहं भवतोः कृते एकैकां शिलां ददामि । तां शिरसि संस्थाप्य मनसि यत् याच्यते तत् प्राप्यते । योग्ये काले एतस्य योग्यः उपयोगः क्रियताम्'' इति । ततः सः तौ आशीर्वादेन अनुगृह्य ततः निर्गतवान् ।

ततः चत्वारि दिनानि प्रयाणं कृत्वा तौ राजधानीं प्राप्तवन्तौ । कस्याञ्चित् धर्मशालायां ताभ्यां वासः कृतः । विश्रान्तिसमये तौ त्रिभिः यात्रिभिः क्रियमाणं मन्दस्वरीयं सम्भाषणं श्रुतवन्तौ ।

कश्चित् अवदत् - ''एतावन्ति आभरणानि मया अद्यैव दृष्टानि । इदानीं वयं न दरिद्राः'' इति ।

अपरः अवदत् - ''राज्ञः कोषागारे चौर्यम् एवं लीलया भवेत् इति कदापि मया न चिन्तितम् आसीत्'' इति ।

अन्यः अवदत् - ''वयं शीघ्रम् एव इतः निर्गच्छाम । अन्यथा रक्षकभटाः अस्मान् गृह्णीयुः'' इति ।

उभौ अपि एतत् सम्भाषणं श्रुतवन्तौ । नन्दः अचिन्तयत् यत् एते कथञ्चित् राजभटैः ग्राहणीयाः इति । सोमः अचिन्तयत् - 'एषा



सम्पत्तिः मदधीना करणीया' इति ।

चोराणां निद्राप्राप्तेः अनन्तरं सोमः मुनिना दत्तं शिलाखण्डं शिरसि संस्थाप्य मनसि अवदत् – 'चोराणां समीपे स्थितानि सर्वाणि आभरणानि मम स्यूते भवन्तु' इति ।

ततः सर्वाणि आभरणानि सोमस्य स्यूतं प्रति आगतानि । जागरितः नन्दः एतत् सर्वं पश्यन् आसीत् ।

मध्यरात्रसमये केचन रक्षकभटाः धर्मशालाम् आगताः । 'चोराः अत्र सन्ति इति श्रुतम् अस्माभिः' इति अवदन् ते । नन्देन एतत् वचनं श्रुतम् ।

चौर्यम् अकृतवान् अपि सोमः इदानीं रक्षकभटैः गृहीतः भविष्यति इति विचिन्त्य सः मुनिना दत्तं शिलाखण्डं शिरसि संस्थाप्य मनसि अवदत् – ''सोमस्य स्यूते स्थितानि आभरणानि कोषागारं प्रति गच्छन्तु' इति ।

सैनिकाः धर्मशालायां सर्वत्र अन्वेषणं कृतवन्तः । तावता राजभवनात् आगताः चत्वारः भटाः तान् अवदन् यत् आभरणानि कोषागारस्य कोणे लब्धानि इति ।

एतत् श्रुत्वा चोराः आश्चर्यम् अनुभवन्तः – ''अस्माकं प्रथमं चौर्यम् एतत् । अत्र असाफल्यं प्राप्तम् अस्माभिः । दण्डप्राप्तितः दैवात् वयं रक्षिताः । इतः परं वयं परिश्रमेण कार्यं कुर्वन्तः उत्तमं जीवनं यापयाम'' इति परस्परम् अवदन् ।

रक्षकभटानां दर्शनतः सोमः आदौ भीतः । किन्तु 'नन्दः रक्षणम् अकरोत्' इति यदा ज्ञातं तदा सः गतचिन्तः जातः ।

'अग्रे मया एतादृशी मूर्खता न करणीया' इति सः निश्चितवान् । सः नन्दं प्रीत्या आलिङ्ग्य स्वस्य सङ्कल्पं श्रावितवान् । मित्रे परिवर्तनं कर्तुं समर्थं शिलाखण्डं दत्तवते संन्यासिने मनसा कृतज्ञतां समर्पितवान् नन्दः ।

***– जि. जि. जोशी, S/o जी. पीवा जोसेफ्***

***हैदराबाद्***



## अधिकाः अङ्काः प्राप्तव्याः चेत् ..

''अधिकाः अङ्काः प्राप्तव्याः चेत् किं करणीयम् ?'' इति अपृच्छत् अध्यापकः ।

एकैकः अपि विद्यार्थी एकैकम् उत्तरम् अवदत् ।

'श्रद्धया पठनीयम्' इति उक्तवान् कश्चित्

''बुद्धिमत्ता आवश्यकी तदर्थम्'' इति अवदत् अपरः ।

''यत् वयं पठितवन्तः तत् अवलम्ब्य एव परीक्षायां प्रश्नाः पृष्टाः स्युः'' इति अवदत् अन्यः ।

अन्ते कश्चित् अवदत् – ''आचार्य ! वयं यथा सम्यक् अवगच्छेम तथा अध्यापनीयं भवता'' इति ।

***– आर्. जाह्नवी, नागपुरम्***

# वार्ताविशेषः

## अल्पवयस्कः पदवीधरः



चीनदेशे लियानिङ्गप्रदेशे पाञ्जिन्‌नगरे जन्म प्राप्तवान् झाङ्ग् क्सिङ्ग्याङ्गः तियाञ्जिन्‌नगरे स्थिते तान्त्रिकमहाविद्यालये छात्रत्वेन स्वस्य नाम पञ्जीकारितवान् अस्ति । सः राष्ट्रस्तरीयायां महाविद्यालयीयायां प्रवेशपरीक्षायां (NCEE) ५०५ अङ्कान् प्राप्य उत्तीर्णतां प्राप्तवान् अस्ति । उत्तीर्णतायै यावन्तः अङ्काः प्राप्तव्याः ततोऽपि ४७ अङ्काः आधिक्येन प्राप्ताः सन्ति तेन । एतत्सर्वं कृतवतः तस्य झाङ्गक्सिङ्ग्याङ्गस्य वयः अस्ति १० वर्षाणि ! अतः अत्यल्प-वयस्कः महाविद्यालयच्छात्रः सः एव अस्ति जागतिकस्तरे । षड्वर्षात्मकं प्राथमिकशालाध्ययनं सः वर्षद्वयाभ्यन्तरे समापितवान् । पुनः वर्षद्वयाभ्यन्तरे सः कनीयमाध्यमिकस्तरीयं वर्षत्रयात्मकम् अध्ययनं समापितवान् । ततः २००४ तमे वर्षे तेन पदवीधरत्वम् आसादितम् । सः अन्येभ्यः छात्रेभ्यः वयसा कनिष्ठः इत्यतः अध्ययनकाले पित्रा सह आगमनाय तस्मै अनुमतिः दत्ता अस्ति महाविद्यालयेन । झाङ्ग्क्सिङ्ग्याङ्गस्य प्रतिभा असाधारणी इत्यतः तस्य अध्यापनाय व्यवस्थायाः कल्पनं स्पर्धाह्वानसूचकम् एव अस्ति इति वदति महाविद्यालयः ।

## सस्यारोपणे विक्रमः

तमिळुनाडुराज्ये नागपट्टनजनपदे स्थितयोः उभयोः ग्रामयोः जनाः विक्रमसाधकपरिमाणेन सस्यानि आरोप्य अपि न श्रान्ताः । २००२ तमे वर्षे समुद्रतीरप्रदेशे आरोपिताः सहस्राधिकसङ्ख्याकाः केसुयारिनावृक्षाः गते वर्षे डिसेम्बरमासे प्रवृत्तात् सुनामी-आक्रमणात् जनान् यत् अरक्षन् सा एव तेषाम् एतस्य प्रयासस्य मूलप्रेरणा । नलुवेदपतिग्रामीणाः वर्षद्वयात् पूर्वं २३ घण्टाभ्यन्तरे ५०,२४४ सस्यानि आरोपितवन्तः आसन् । तदवसरे एषः आसीत् अद्वितीयः विक्रमः । किन्तु गते वर्षे गान्धिजयन्तीदिने २४ घण्टाभ्यन्तरे ४७ एकर्‌मिते प्रदेशे २,५४,४६४ सस्यानि आरोप्य नलुवेदपतिपुष्पवनग्रामजनाः पूर्वतनस्य विक्रमस्य अद्वितीयतां भञ्जितवन्तः सन्ति । एतस्मिन् सस्यारोपणकार्यक्रमे ३०० कृषिकाः भागम् अवहन् । अक्टोबरमासस्य प्रथमे दिनाङ्के अपराह्णे ३.४० वादने तैः सस्यारोपणम् आरब्धम्, अनन्तर-दिने तस्मिन् एव समये तस्य कार्यस्य मङ्गलम् उक्तं च । स्वतन्त्रैः परिवीक्षकैः एतत् जागतिकविक्रम-कृत्यम् अक्षिसात्कृतम् ।





# चतुरा स्नुषा

सदानन्दः सरस्वत्याः एकमात्रपुत्रः । बाल्ये एव तेन पितृवियोगः प्राप्तः आसीत् । अतः सरस्वती एव तं पोषितवती आसीत् प्रीत्या । पञ्चविंशतिः वर्षाणि अतीतानि चेदपि सः किमपि कार्यं कर्तुं कौशलं न प्राप्तवान् । शिक्षणे अपि अनिपुणः आसीत् सः ।

सरस्वती कोपस्वभावा । लघुना अपि कारणेन सा असन्तोषं प्राप्नोति स्म । प्रतिवेशिभिः सह तस्याः व्यवहारः रूक्षः भवति स्म । अल्पः अपि अंशः तस्यै न रोचते चेत् सा स्फुरितैः शब्दैः निन्दति स्म । व्ययविषये महतीं कृपणतां दर्शयति स्म अपि सा ।

यद्यपि तस्याः उत्तमा सम्पत्तिः आसीत्, तथापि तस्याः स्वभावस्य कारणतः कन्यापितरः सदानन्दाय कन्यां दातुम् उत्सुकाः न आसन् । अन्ते दूरग्रामे निर्धनकुले जाता काचित् कन्यका वधूरूपेण आनीता तया । तस्याः नाम भवानी इति ।

पतिगृहम् आगता भवानी अचिरात् एव श्वश्र्वाः स्वभावं व्यवहारं च ज्ञातवती । सरस्वती सदा भवान्याः द्वारा बहूनि कार्याणि कारयति स्म । भवती सम्यक् कार्यं न करोति इति स्नुषां सदा निन्दति स्म अपि । स्नुषाविषये कटुवचनानि सदा निर्गच्छन्ति स्म तस्याः मुखात् ।

मम माता मत्पत्नीविषये कर्मकरीवत् व्यवहरति इति सदानन्दः सम्यक् जानाति स्म । तथापि मातुः क्रोधात् भीतः सः मौनेन तिष्ठति स्म । सरस्वती चिन्तयति स्म यत् यदि अहं स्नुषां निन्दनेन न दण्डयेयं तर्हि सा मम पुत्रं स्वाधीनं कृत्वा आदेशदानेन स्वस्य इच्छायाः अनुगुणं प्रवर्तयेत् इति ।

एवमेव दिनानि गतानि । शीतकाले गृहस्य वाटिकायां वृन्ताकाः बहवः प्रवृद्धाः । भवान्यै वृन्ताकेन निर्मिताः व्यञ्जनादयः विशेषतः रोचन्ते स्म । किन्तु सरस्वती स्वनिमित्तं पुत्र-

'अनामिका'



निमित्तं च यावत् आवश्यकं तावदेव व्यञ्जनं करोति स्म । अतः भवान्या व्यञ्जनस्य अल्पः भागः अपि कदापि न प्राप्यते स्म ।

कदाचित् सरस्वत्याः भगिन्याः पुत्रस्य विवाहः निश्चितः । विवाहार्थं सरस्वत्या अवश्यं गन्तव्यम् आसीत् । गमनात् पूर्वं सा स्नुषाम् आहूय - ''प्रतिदिनं भवत्या वृन्ताकाः सङ्ग्रहणीयाः, कण्डोले स्थापनीयाः च । अहं विवाहात् प्रत्यागत्य विपणौ तेषां विक्रयणं करिष्यामि । एकमपि फलं भवत्या न उपयोक्तव्यम्'' इति उक्त्वा पुत्रेण सह विवाहाय निर्गतवती ।

श्वश्र्वाः पत्युः च निर्गमनस्य अनन्तरं भवानी वाटिकास्थानि फलानि सर्वाणि सङ्गृह्य व्यञ्जनं कृत्वा आकण्ठं भुक्तवती । प्रतिदिनम् एवमेव प्रवृत्तम् ।

विवाहं समाप्य चतुर्थे दिने प्रत्यागता सरस्वती गृहे वृन्ताकानां सङ्ग्रहम् अदृष्ट्वा महता क्रोधेन पुत्रम् अवदत् - ''भवतः पत्नी चोरी अस्ति । अद्य तया वृन्ताकाः चोरिताः । न जाने अग्रिमेषु दिनेषु सा किं किं चोरयेत् इति । गृहस्य अमूल्यानि सर्वाणि वस्तूनि चोरयेत् अपि सा । एषा अस्मद्गृहे न तिष्ठेत् । सर्पाय क्षीरं दत्तम् अस्माभिः । एताम् अद्यैव जीर्णे देवीमन्दिरे परित्यज्य आगच्छतु । श्वः अपि यदि एषा सजीवं तिष्ठेत् तर्हि किं करणीयम् इति चिन्तयाम'' इति ।

सदानन्दः मातुः कोपस्य शमनार्थं, तां बोधयितुं च बहुधा प्रयत्नं कृतवान् । किन्तु ततः किमपि प्रयोजनं न सिद्धम् । ततः अनन्यगतिकतया सः पत्नीं देवीमन्दिरे परित्यज्य आगतवान् । आत्मनः कृत्यार्थं नितरां लज्जाम् अनुभूतवान् सः ।

शीतकालः सः । पञ्चदशनिमेषाभ्यन्तरे एव भवानी शैत्यपीडां सोढुम् असमर्था जाता । पार्श्वे एव देवीमन्दिरम् अस्ति, किन्तु तत्र पूजादिकं न प्रचलति इति सा जानाति स्म । शैत्यतः आत्मनः रक्षणाय सा मन्दिरस्य अन्तः गतवती । अत्रान्तरे तया केषाञ्चित् पादध्वनिः श्रुतः । सा झटिति देव्याः मूर्तेः पृष्ठतः निलीय स्थितवती ।

अल्पे एव काले चत्वारः चोराः तत्र आगताः । गर्भगृहस्य पुरतः उपविश्य चौर्येण प्राप्तानां वस्तूनां विभागे ते मग्नाः । विभागविषये तेषु विवादः उत्पन्नः । 'एषः मम भागः' इति वदन् कश्चन चोरः कानिचन आभरणानि स्वीकृतवान् ।

''कथम् एतत् शक्येत ? प्रमुखः भागः भवता एव स्वीकृतः चेत् अस्माभिः किं प्राप्येत ?'' इति अवदत् अपरः ।

''चतुर्भिः समानः भागः प्राप्येत'' इति अवदत् अन्यः ।

भवानी सर्वं शृण्वती आसीत् । देव्या आविष्टा इव सा अवदत् - ''मम भागः क्व ? भवतां कण्ठं भक्षयित्वा रक्तं पास्यते मया'' इति ।

एतत् श्रुत्वा - ''अहो, देवी कुपिता अस्ति !'' इति वदन्तः चोराः भीताः सन्तः ततः पलायितवन्तः ।

'मया दुस्साहसम् एव कृतम्' इति चिन्तयित्वा भवानी आश्चर्येण स्तब्धा । क्षण-कालं विचिन्त्य सा तत्रत्यानि आभरणानि धृत्वा प्रातःकालाभ्यन्तरे गृहं प्रत्यागता ।

प्रातः गृहस्य पुरतः जलं सिञ्चन्ती स्थिता सरस्वती भवानीं दृष्ट्वा नितराम् आश्चर्ययुक्ता । सा महता आश्चर्येण स्नुषां पश्यन्ती - ''भवती भवानी एव ननु ! मया बाल्ये कामाक्षीदेवी दृष्टा आसीत् । सा इव एव अस्ति भवती'' इति अवदत् ।

तदा भवानी मन्दहासपूर्वकम् उक्तवती - ''आर्यायाः कामाक्षीदेव्याः कृपातः एव एतानि आभरणानि मया प्राप्तानि । शैत्यात् अन्धकारात् च भीता अहं मूर्तेः पृष्ठतः निलीय स्थिता आसम् । अल्पे काले मन्दिरे महान् प्रकाशः दृष्टः । काश्चन सौभाग्यवत्यः तत्र दृष्टाः । 'एतानि आभरणानि भवत्यै । वयं देव्याः सेविकाः । एतानि देव्याः प्रसादः इति भाव्यताम्' इति माम् उक्त्वा ताः एतानि



आभरणानि मह्यं दत्तवत्यः । तासां निर्गमनस्य अनन्तरम् अपि अहम् आभरणानि आश्चर्येण पश्यन्ती आसम् । तदा देवी मन्दस्वरेण उक्त-वती - 'वत्से ! जगति दारिद्र्यम् एव सर्वेषाम् अनर्थानां मूलम् । भवती निर्धनकुले जन्म प्राप्तवती । तदेव सर्वेषां कष्टानां निदानम् । भवतीम् उद्दिश्य केन किम् उक्तं, कथं च व्यवहृतम् इति अहं जानामि । भवत्याः श्वश्रूः विगतकोपा भवतु । मया यथा करुणामयत्वं प्रदर्शितं तथैव सा अपि व्यवहरतु' इति । ततः अहम् आभरणानि धृत्वा अत्र आगता'' इति ।

एतस्य श्रवणात् सरस्वती सन्तुष्टा जाता । सा स्नुषां गृहस्य अन्तः नीतवती । अल्पे एव काले तस्याः मनसि इच्छा उत्पन्ना यत् मया अपि मन्दिरं गत्वा आभरणानि प्राप्तव्यानि

इति । अतः सा तस्यां रात्रौ देवीमन्दिरं गतवती । देवीं साष्टाङ्गं नमस्कृत्य सा प्रार्थितवती – ''देवि ! अद्य आरभ्य अहं कोपं न करिष्यामि । यथा भवत्या मम स्नुषा अनुगृहीता तथैव अहमपि अनुग्रहणीया । बहूनि आभरणानि मह्यं दातव्यानि च'' इति ।

सरस्वती इतोऽपि वक्तुम् इच्छति स्म । तावता तया पादध्वनिः श्रुतः । सा मूर्तेः पृष्ठतः गत्वा स्थितवती । पूर्वदिने ये आगताः आसन् ते एव चोराः अद्यापि आगताः । पूर्वदिने यः कण्ठस्वरः श्रुतः सः देव्याः उत अन्यस्य इति परीक्षितुम् इच्छन्ति स्म ते ।

तेषु अन्यतमः देवीं नमस्कृत्य अवदत् – ''अम्ब ! वयं न वृत्त्या चोराः । कदाचित् लघुचौर्यं कृत्वा कथञ्चित् जीवामः वयम् । ह्यः इव अद्यापि वयम् आभरणैः सह आगताः स्मः । अस्माभिः चौर्यम् अनुवर्तनीयम् उत न इति कृपया आदिशतु भवती'' इति ।

सरस्वती झटिति उच्चस्वरेण अवदत् – ''अये ! आभरणानि अत्रैव परित्यज्य गच्छन्तु भवन्तः झटिति । अन्यथा अहं भवतः सर्वान् खादिष्यामि'' इति ।

अद्यतनः स्वरः अन्यः एव इति ज्ञातवान् कश्चन चोरः मूर्तेः पृष्ठभागं गतवान् । तत्र तेन सरस्वती दृष्टा । महान् क्रोधः प्राप्तः तेन । सः सरस्वतीं हस्ते गृहीत्वा आकृष्य अग्रे आनीतवान् । नितरां भीता सरस्वती स्नुषया आनीतानाम् आभरणानां विषयम् उक्तवती ।

हस्तच्युतानि आभरणानि पुनः प्राप्तुम् इच्छन्तः चोराः सरस्वत्या सह तस्याः गृहं गतवन्तः । श्वश्रूः एवमेव कुर्यात् इति भवानी पूर्वम् एव चिन्तितवती आसीत् । अतः भूस्वामिनः सेवकान् आनायितवती आसीत् सा । आगतान् चोरान् भूस्वामिसेवकाः गृहीतवन्तः । आभरणानि भूस्वामिने अर्पितवती भवानी ।

भवान्याः चातुर्यं, समयप्रज्ञां, निष्कटतां च दृष्ट्वा नितरां सन्तुष्टः भूस्वामी तस्यै अमूल्यानि उपायनानि दत्तवान् । तस्य पत्ये स्वस्य आस्थाने उद्योगः अपि तेन दत्तः ।

ततः आरभ्य सरस्वती भवानीं प्रमादवशात् अपि न तर्जितवती । पुत्रीम् इव तां प्रीत्या दृष्टवती सा ।



# चन्दमामाप्रश्नावली - ३

Co-sponsored by
Infosys FOUNDATION,
Bangalore

**यः समुचितम् उत्तरं दास्यति सः अर्हति रू. २५०/ - पारितोषिकत्वेन***

अत्र ये प्रश्नाः भवन्ति तेषाम् उत्तराणि गतवर्षस्य (२००५) द्वादशसु सञ्चिकासु शीर्षकेषु कथासु वा सन्ति । यत् पठितं तस्य स्मरणतः उत्तरम् अविलम्बेन प्राप्यते । यदि न स्मर्येत तर्हि गतस्य वर्षस्य द्वादश अङ्कान् पुरतः संस्थाप्य पृष्ठेषु परिशील्य उत्तरं प्राप्यतां लीलया । आं, लीलाविषयः एव अस्ति अयम् ।

** एकाधिकजनाः यदि समुचितम् उत्तरं प्रेषयेयुः तर्हि तेषु पञ्च जनान् यादृच्छिकतया चित्वा तेषु पारितोषिकधनं वितीर्यते ।*

**भवद्भिः करणीयम्** - १. उत्तराणि लेखनीयानि । २. नाम, वयः, (ऊनषोडशवर्षीयाः एव अत्र भागं वोढुम् अर्हाः) सङ्केतं (पिन्कोड्सहितं) च प्रेषयन्तु । ३. ग्राहकता अस्ति चेत् ग्राहकसङ्ख्या अपि लेखनीया । ४. पिहितपत्रस्य उपरि **चन्दमामाप्रश्नावली - ३** इति लेखनीयम् । ५. एप्रिल्समाप्तितः पूर्वम् उत्तराणि अस्माभिः प्राप्तव्यानि । ६. जून्मासे परिणामः प्रकाशयिष्यते ।

१. एकादशवर्षपर्यन्तं सः सामान्यः बालः एव आसीत् । अग्रिमेषु वर्षेषु तस्य औन्नत्यं नितराम् अवर्धत । तस्मात् तेन विविधानि कष्टानि अनुभूतानि । तस्य नाम किम् ?

२. दासवंशस्य संस्थापकः कः ?

३. ''योग्यं मूल्याङ्कनं कर्तुम् असमर्थः जनः अमूल्यं वस्तु प्राप्य अपि तस्य लाभं प्राप्तुं न अर्हति । मूर्खाः एव स्वस्य मुर्खतां सर्वेषां पुरतः प्रकटयन्ति'' इत्येषा नीतिः कस्यां कथायां प्रतिपादिता ?

४. सः राजकुमारः कः, यश्च स्वस्य ज्ञानसम्पदः बलेन सहोदरौ जलराक्षसात् रक्षितवान् ?

५. जैनमतस्य उभे शाखे के ?

६. झरोष्ट्रियन्जनानां पुजास्थानस्य नाम किम् ?

७. मुम्बयीस्थः कश्चन तन्त्रशास्त्रज्ञः सुप्रसिद्धाय भारतीय-कलाकाराय एम्.एफ्.हुसेनाय १०१ कोटिं रूप्यकाणि दत्तवान् अस्ति शतस्य चित्राणां निर्माणाय । तस्य नाम किम् ?

८. अधोलिखितं चित्रं कस्याः कथायाः ?



# जीवनमौल्यानि

भवन्तः राज्ञः फिलिपस्य विषये जानन्त्येव । तस्य पुत्रः एव चक्रवर्ती अलेक्साण्डरः । क्रि.पू. ३३६ तमे वर्षे अलेक्साण्डरः अल्पे एव वयसि सिंहासनम् आरूढवान् । तेन बहवः देशाः जिताः । ईजिप्ट्पर्शियाप्रभृतयः देशाः अपि तेन जिताः । भारतस्य कश्चन भूभागः अपि आक्रान्तः आसीत् तेन ।

यद्यपि तेन बहवः देशाः जिताः, तथापि प्रसिद्धस्य तत्त्वशास्त्रज्ञस्य अरिस्टाटलस्य शिष्यस्य तस्य मनः तु न हि युद्धैकासक्तम् आसीत् । विदुषां संन्यासिनां च सहवासः तस्य प्रियः आसीत् ।

अथेन्स्नगरस्य समीपे डियोगोनसः नाम तत्त्वशास्त्रज्ञः निवसति स्म । अहङ्कारः दर्पः इत्यादयः तस्मै न रोचन्ते । स्वीये विचारे दृढा मतिः आसीत् तस्य । तदीया बुद्धिमत्ता सर्वत्र ख्याता आसीत् ।

कदाचित् चक्रवर्ती अलेक्साण्डरः डियोगोनसाय ऐश्वर्यं, तदीयेच्छानुगुणम् अन्यत् उपायनं वा दातुम् ऐच्छत् । 'वासाय उत्तमं गृहम् अपि नास्ति एतस्य' इति चिन्तयन् खिद्यते स्म सः ।

"आर्य ! अहं किं साहाय्यं करवाणि ?" इति कदाचित् तम् अपृच्छत् अलेक्साण्डरः ।

डियोगोनसेन झटिति उत्तरं किमपि न उक्तम् । 'कियत् ऐश्वर्यं प्रष्टव्यम् इति प्रायः



चिन्तयन् स्यात् एषः' इति अचिन्तयत् चक्रवर्ती । डियोगोनसेन किमपि न प्रार्थितम् एव । एतत् मौनम् असहमानः अलेक्साण्डरः स्वस्य प्रश्नं पुनः उच्चारितवान् ।

तदा डियोगोनसः शान्ततया अवदत् - ''साहाय्यं करणीयम् एव इति बुद्धिः यदि भवति स्यात् तर्हि किञ्चित् अपसियतां, येन अहं सूर्यप्रकाशं प्राप्नुयाम्'' इति ।

अलेक्साण्डरस्य पार्श्वे स्थिताः जनाः अचिन्तयन् यत् उद्धतवचनम् उक्तवन्तम् एतं चक्रवर्ती दण्डयेत् इति । किन्तु अलेक्साण्डरः मौनेन किञ्चित् अपसृतवान् ।

सः स्वस्य अनुयायिनः अवदत् - ''यदि अहम् अलेक्साण्डरः न स्यां तर्हि डियोगोनसः भवेयम्'' इति ।

अलेक्साण्डरः डियोगोनसेन सह सहभोजनम् अपि विशेषतः इच्छति स्म । यद्यपि डियोगोनसस्य भोजनम् अतिसामान्यं, तथापि तदेव प्रियं भवति स्म चक्रवर्तिनः अपि अलेक्साण्डरस्य ।

कदाचित् अरिस्टिपसः नाम अपरः तत्त्वशास्त्रज्ञः डियोगोनसस्य समीपम् आगतवान् । राज्ञा पुरस्कृतः सः वैभवजीवनं यापयति स्म ।

सः डियोगोनसस्य यवागूसेवनं दृष्ट्वा कदाचित् अवदत् - ''मित्र ! राज्ञः प्रसादनं कथं करणीयम् इति यदि भवता ज्ञातं स्यात् तर्हि एवं यवागूः सेवनीया न अभविष्यत् कदापि'' इति ।

तदा डियोगोनसः शान्ततया एव तम् अवदत् - ''मित्र ! यदि भवान् यवागूसेवनेन जीवनं कथं यापनयिम् इति अज्ञास्यत् तर्हि राज्ञः प्रसादनाय प्रयासः करणीयः न अभविष्यत् प्रायः'' इति ।

## चन्दमामाप्रश्नावली प्रथमा (फेब्रवरी - २००६)

संस्कृतचन्दामामावाचकेषु केनापि समुचितम् उत्तरं न प्रेषितम् इत्यतः वयं कस्मैचिदपि पारितोषिकं यच्छन्तः न स्मः । वाचकानां ज्ञानाय प्रथमायाः प्रश्नावल्याः उत्तरम् अधः प्रकाशयन्तः स्मः । सर्वे वाचकाः एतस्यां प्रश्नावलीस्पर्धायां सोत्साहं भागं वहेयुः इति अस्माकम् अभ्यर्थना ।

## प्रथमायाः चन्दमामाप्रश्नावल्याः उत्तराणि

१. मुम्बयीस्थं छत्रपतिशिवाजिरेल्वेस्थानकम् ।
२. 'स्वप्नस्य तात्पर्यम्' इत्यस्याम् ।
३. ताजभवनम् ।
४. कलरिपट्टु । बोधिधर्मेण आविष्कृतम् ।
५. 'अत्रैव स्यात्पाटलसस्यम्' इत्यस्याम् ।
६. 'राजकुमाराः शिलास्तम्भाश्च' इत्यस्याम् ।



# दौर्भाग्यम्

शाङ्गधरनामके राज्ये आञ्जनेयशर्मा नाम कश्चन ज्योतिषिकः निवसति स्म । जन्मकुण्डलीपरिशीलने तस्य विशेषसामर्थ्यम् आसीत् । असंख्याः जनाः स्वस्य जन्मकुण्डलीं तस्मै दर्शयित्वा शुभाशुभफलं ज्ञात्वा गच्छन्ति स्म ।

कदाचित् सः राज्ञः विक्रमसिंहस्य जातकम् अपश्यत् । ततः विविधाः ग्रन्थाः परिशीलिताः तेन । बहुधा गणना अपि कृता । राज्ञः जीवने कण्टकः अस्ति इति तेन स्पष्टतया अवगतम् ।

विक्रमः उत्तमं शासनं करोति स्म । जनानाम् आवश्यकतां काले काले अवगत्य तैः न प्रार्थितं चेदपि तां पूरयति स्म सः । तस्य उत्तराधिकारी राजकुमारः तु अल्पवयस्कः आसीत् ।

देशस्य प्रजात्वम् आपन्नेन मया काले कण्टकपीडां निवेद्य राज्ञः रक्षणं चिन्तनीयम् एव, यदि अहम् एवं न कुर्यां तर्हि मया महान् देशद्रोहः एव आचरितः भवेत् इति चिन्तयित्वा आञ्जनेयशर्मा अश्वम् आरुह्य राजधानीं प्रति गतवान् ।

दिनत्रयात्मिकायाः यात्रायाः अनन्तरं सः राजप्रासादं प्राप्तवान् । तत्र द्वारपालकाः तस्य प्रवेशं निराकृतवन्तः ।

"अयि भोः, अहम् आञ्जनेयशर्मा नाम कश्चन ज्योतिषिकः । मया त्वरया राजा द्रष्टव्यः । अतः कृपया अनुज्ञा दीयताम्" इति प्रार्थितवान् आञ्जनेयशर्मा ।

"राज्ञः समीपे किं कार्यम् अस्तीति आदौ वदतु । ततः राज्ञः दर्शनाय अनुमतिदानविषये चिन्तयिष्यामः" इति अवदन् रक्षकभटाः ।

"तत् तु रहस्यम् । राजानम् एकमेव अहं तत् वक्तुम् अर्हामि" इति अवदत् आञ्जनेयशर्मा ।

अत्रान्तरे सेनाधिपतिः तत्र आगतः । सः

आञ्जनेयशर्माणं पश्यन् तान् द्वारपालकान् अपृच्छत् – ''कः एषः ? किम् इष्यते एतेन ?'' इति ।

द्वारपालकाः प्रवृत्तं सर्वम् अवदन् । सर्वं श्रुत्वा सेनाधिपतिः आञ्जनेयशर्माणम् अवदत् – ''शर्मवर्य ! विषयः सर्वेषां पुरतः वक्तुम् अनर्हः चेत् सः मम कर्णे उच्यताम्'' इति ।

''सेनापतिवर्य ! क्षन्तव्यः अहम् । अहम् एतं विषयं राजानम् एकम् एव वक्तुम् अर्हामि, न अन्यम् । यतः तत् अतिमहत्त्वपूर्णं रहस्यम्'' इति अवदत् आञ्जनेयशर्मा ।

''अहम् एतस्य देशस्य सेनाधिपतिः अस्मि । देशे तादृशं रहस्यं किमपि नास्ति, यच्च अहं न जानीयाम् । अतः भवान् महारहस्यम् अपि मां वक्तुम् अर्हति एव'' इति गम्भीरस्वरेण अवदत् सेनाधिपतिः ।

आञ्जनेयशर्मा सेनाधिपतेः कर्णे आत्मना ज्ञातं मन्दस्वरेण अवदत् । एतत् श्रुत्वा सेनाधिपतिः आश्चर्येण अपृच्छत् – ''एतत् भवता कथं ज्ञातम् ?'' इति ।

''शास्त्रबलात् ज्ञातं मया'' इति अवदत् आञ्जनेयशर्मा ।

''भवान् अत्र एव तिष्ठतु । एषोऽहम् अनुज्ञां सम्पाद्य आगमिष्यामि'' इति उक्त्वा सेनाधिपतिः भवनस्य अन्तः गतः, मन्त्रिणम् एतं विषयं रहसि अवदत् च । एतस्य श्रवणात् मन्त्री भीतः ।

''किम् एतं विषयं राजानम् उक्तवान् भवान् ?'' इति अपृच्छत् मन्त्री ।

''न उक्तम् अद्यावधि'' इति अवदत् सेनाधिपतिः ।



''एवं तर्हि सः आदौ कारागारे स्थाप्यताम् । ततः तन्मुखात् सत्यं वाचयाम'' इति आज्ञां कृतवान् मन्त्री ।

वराकः आञ्जनेयशर्मा राज्ञः दर्शनाय अनुज्ञायाः प्रतीक्षां कुर्वन् आसीत् । तावता द्वित्राः सैनिकाः तत्र आगत्य तं नीत्वा कारागारे स्थापितवन्तः । 'अहं निरपराधः' इति बहुधा प्रार्थितवान् आञ्जनेयशर्मा । किन्तु सैनिकाः तद्विषये अवधानं न दत्तवन्तः एव ।

ते तम् अपृच्छन् – ''भवता सह अन्ये देशद्रोहिणः कति सन्ति ? एषः विषयः भवता कथं ज्ञातः ?'' इति ।

घण्टानन्तरं सेनाधिपतिः आञ्जनेयशर्मसमीपम् आगतवान् । तं दृष्ट्वा शर्मा रुदन् अवदत् – ''मम एषा दुर्गतिः कथम् ? राज्ञः जन्मकुण्डलीं पश्यता मया अपराधः कृतः ।

इदानीं विवेकः प्राप्तः अस्ति मया । यदि भवन्तः मां त्यजेयुः तर्हि अहं ग्रामं गच्छेयम् । सर्वस्यापि कारणं मम अविवेकः एव । पूर्वजन्मनः कर्मणः फलम् एतत्'' इति ।

तदा सेनापतिः क्रोधमिश्रितेन स्वरेण अवदत् – ''अये शर्मन् ! व्यर्थस्य कर्मसिद्धान्तस्य पौनःपुन्येन कथनेन किम् ? भवता सह देशद्रोहिणः कति सन्ति इति वदतु । कीदृशः व्यूहः रचितः इति वदतु तावत्'' इति ।

''महोदय ! देशद्रोहवार्ताम् अहं सर्वथा न जानामि । मयि विश्वसितु कृपया'' इति दैन्येन उक्तवान् आञ्जनेयशर्मा ।

सेनापतिः तस्य वचने विश्वासं न अकरोत् । सः सैनिकान् आदिशत् – ''यावत् एषः सत्यं न वदिष्यति तावत् विविधैः प्रकारैः एषः दण्ड्यताम्'' इति ।

अनन्तरदिने राजा विक्रमसिंहः राजप्रासादे इतस्ततः यदा सञ्चरन् आसीत् तदा अज्ञातपूर्वः कश्चन जनः तं लक्ष्यीकृत्य बाणप्रयोगं कृतवान्, ततः धावितवान् च । राजा तस्मात् प्राणैः वियुक्तः जातः ।

राज्ञः मरणस्य वार्तां श्रुत्वा आस्थानज्योतिषिकः अवदत् – ''राज्ञः जन्मकुण्डल्याम् उल्लिखितम् अस्ति यत् राजानम् अपायात् यः रक्षितुं प्रयतते तस्य मृत्युः निश्चितः इति । मया अपि एषः अंशः ज्ञायते स्म । अपायसम्भावनां राजानं कथं ज्ञापयेयम् इति चिन्तयन् अहं भीतः आसम् । अत्रान्तरे दुर्घटना घटिता एव'' इति ।

क्षणं विचिन्त्य मन्त्री अवदत् – ''आञ्जनेयशर्मा महादेशभक्तः । स्वस्य प्राणापायम् अपि अपरिगणय्य राज्ञः रक्षणाय तेन प्रयासः कृतः । मिथ्याभावेन वयं तं पीडितवन्तः । तस्य सम्माननम् अस्माकं कर्तव्यम् अस्ति'' इति ।

ततः सः सेनापतिम् आहूय आज्ञापितवान् यत् आञ्जनेयशर्मा अत्र आनेतव्यः इति ।

सेनापतिः कारागारं गतवान् । अर्धघण्टानन्तरं प्रत्यागत्य सः अवदत् – ''मन्त्रिवर्य ! आञ्जनेयशर्मा नास्ति इदानीम् । दुःखभारकारणतः हृदयस्तम्भनं प्राप्य सः दिवं गतः एव । वराकः सः महाराजस्य जन्मकुण्डलीम् अपश्यत्, किन्तु स्वस्य जन्मकुण्डल्याः दर्शनं विस्मृतवान् सः'' इति ।





# वञ्चकेन प्राप्तं दण्डनम्

प्राचीने काले काशीराज्यं ब्रह्मदत्तः नाम राजा परिपालयति स्म । तस्य कश्चन पुरोहितः आसीत् पिङ्गलः नाम । सः पिङ्गल-वर्णः आसीत् । तस्य केशाः अपि पिङ्गल-वर्णाः आसन् । तस्मिन् समये बोधिसत्त्वः नक्षत्रेशनाम्ना पिङ्गलस्य शिष्यत्वेन विद्याभ्यासे निरतः आसीत् ।

राज्ञः पुरोहितस्य पिङ्गलस्य कश्चन श्यालः आसीत् । सोऽपि पिङ्गलवर्णीयः एव । तस्य केशाः अपि तादृशाः एव । सोऽपि पिङ्गल-सदृशसामर्थ्यवान् एव । अतः उभौ अपि आत्मानम् एव श्रेष्ठं भावयतः स्म । तस्मात् तयोः महत् वैरम् आसीत् । पिङ्गलः श्यालस्य अगौरवं कर्तुं बहुधा प्रयत्नं कृतवान् । तेन विभिन्नानि कुतन्त्राणि आश्रितानि । तथापि साफल्यं न प्राप्तं तेन ।

अन्ते पिङ्गलः श्यालस्य नाशनाय काञ्चित् योजनां कृतवान् । सः राज्ञः समीपं गत्वा निवेदितवान् – ''महाराज ! अस्माकं काशी-नगरं समग्रे भारते श्रेष्ठम् अस्ति । भवान् अपि सर्वेषु राजसु श्रेष्ठः । एवं स्थिते अपि अस्माकं दुर्गस्य निर्माणे दोषस्य सद्भावः निश्चयेनास्ति चिन्ताकरः । अस्माकं दुर्गस्य दक्षिणद्वारस्य निर्माणे दोषः जातः अस्ति । एतत् अमङ्गलकरम् । एतस्य कारणतः देशे अस्माकम् अपकीर्तिः अपि भवितुम् अर्हति । अतः स च दोषः यावच्छीघ्रं समीकरणीयः'' इति ।

''एतदर्थं किं करणीयम् अस्माभिः ?'' इति पृष्टवान् राजा ।

''विद्यमानं द्वारं पातनीयम् । शुभदायकं काष्ठम् अन्विष्य प्राप्य अपरं द्वारं निर्माय तत्र प्रतिष्ठापनीयम् । तदवसरे नगरदेव्यै बलिः अपि समर्पणीया'' इति अवदत् पिङ्गलः ।

राजा पिङ्गलस्य प्रस्तावम् अङ्गीकृतवान् । ततः तस्य आज्ञायाः आधारेण पिङ्गलः



दक्षिणद्वारस्य भञ्जनं कारितवान् । तस्मिन् स्थाने स्थापनाय नूतनस्य द्वारस्य निर्माणम् अपि अचिरात् एव सम्पन्नम् ।

ततः पिङ्गलः राज्ञः समीपं गत्वा विनयेन अवदत् - ''महाराज ! नूतनं द्वारं सिद्धम् अस्ति । तस्य स्थापनाय श्वः एव प्रशस्तः कश्चन मुहूर्तः अस्ति अपि । अतः योग्यां बलिं दत्त्वा नूतनस्य द्वारस्य प्रतिष्ठापनाय कृपया अनुज्ञा दीयताम्'' इति ।

''बलेः दानाय का व्यवस्था करणीया ?'' इति पृष्टवान् राजा ।

''महाराज ! पिङ्गलवर्णः पिङ्गलकेशः च ब्राह्मणः बलिरूपेण अर्पणीयः । तदीयेन मांसेन रक्तेन च रक्षिकाः शक्तयः सन्तुष्टाः भवितुम् अर्हन्ति । बलिदानानन्तरं तस्य निखननं तत्र एव करणीयम् । तदुपरि द्वारं प्रतिष्ठापनीयम् अपि'' इति अवदत् पिङ्गलः ।

''भवतु नाम । तादृशलक्षणोपेतस्य एव अन्वेषणं क्रियताम् । तं बलिरूपेण समर्प्य द्वारं प्रतिष्ठाप्यताम् अपि'' इति अवदत् पिङ्गलः ।

'शत्रोः नाशनाय चिरप्रतीक्षितः अवसरः सम्प्राप्तः अस्ति' इति चिन्तयन् पिङ्गलः नितरां सन्तुष्टः । ततः सः गृहं गत्वा पत्नीम् उद्दिश्य - ''भोः, श्वः भवत्याः भ्रातुः आयुः समाप्तं भविष्यति । श्वः नूतनद्वारस्य निर्माणावसरे सः बलिरूपेण समर्पयिष्यते । एतदर्थं सर्वा व्यवस्था कृता अस्ति'' इति सगर्वम् अवदत् ।

''मम भ्राता एव किमर्थं बलिरूपेण अर्पणीयः ? किम् एतं प्रस्तावं राजा अनुमतवान्

अस्ति ?'' इति अपृच्छत् पिङ्गलस्य पत्नी ।

''मया राज्ञः अनुज्ञा प्राप्ता अस्ति एव । अमुकस्य एव बलिः भविष्यति इति तु न उक्तम् । अमुकलक्षणोपेतः ब्राह्मणः बलित्वेन अर्पणीयः इति मया सूचितं, राज्ञा अनुमतं च । श्वः राज्ञे भवत्याः भ्रातरं प्रदर्श्य अहं वदिष्यामि यत् मया सूचितैः लक्षणैः युक्तः अस्ति अयम् इति'' इति अवदत् पिङ्गलः ।

एतदनन्तरं पिङ्गलस्य पत्नी पत्या सह कमपि विवादं न कृतवती । ततः सा भ्रात्रे वार्तां प्रेषितवती यत् प्राणरक्षणं करणीयं चेत् रात्र्यभ्यन्तरे नगरं परित्यज्य कुत्रापि अज्ञातं स्थलं गन्तव्यम् इति ।

श्यालेन अवगतं यत् मम भगिनीपतिः मम नाशनाय एतत् कुतन्त्रं रचितवान् इति । अतः सः पिङ्गलकेशान् पिङ्गलवर्णान् नगरे स्थितान् अन्यान् अपि द्विजान् अन्विष्य तैः सह रात्रौ एव नगरात् निर्गतवान् ।

अनन्तरदिने पिङ्गलः राजसमीपं गत्वा अवदत् – ''महाराज ! बलिनिमित्तम् अर्पयितुं योग्यः अपेक्षितलक्षणसम्पन्नः जनः अमुके स्थले निवसति इति श्रूयते । कृपया सः अत्र आनाय्यताम्'' इति ।

राजा पिङ्गलेन सूचितस्य जनस्य अन्वेषणाय भटान् प्रेषितवान् । भटाः तत्र गत्वा प्रत्यागत्य अवदन् यत् यत् भवत्सूचितः जनः ह्यः रात्रौ एव नगरं परित्यज्य कुत्रापि गतः इति ।

भटानां द्वारा एतां वार्तां ज्ञात्वा राजा अवदत् – ''इदानीं किं वा कर्तुं शक्येत ? अपेक्षित-लक्षणसम्पन्नः जनः कथं प्राप्येत ? कुत्र अन्वेष्टव्यं तदर्थम् ?'' इति ।

तदा वृद्धः मन्त्री अवदत् – ''महाराज ! न



हि एषा महासमस्या । अस्माकं पुरोहितः एव तैः लक्षणैः युक्तः अस्ति । अतः सः बलित्वेन समर्पितः चेत् समस्या परिहृता भविष्यति'' इति ।

''तथा तु कर्तुं शक्येत । किन्तु तदा राज-पुरोहितस्य अभावः खलु भविष्यति ? तदा तत्स्थानपूरणाय समर्थः अन्यः किं लभ्येत ? एतदपि चिन्तनीयं खलु अस्माभिः ?'' इति अवदत् राजा ।

''अस्माकं पुरोहितस्य शिष्यः कश्चन अस्ति । तस्य नाम नक्षत्रेशः इति । सः ज्ञानेन बुद्धिमत्तया गुणेन च गुरुम् अपि अतिशेते । तं भवान् राजपुरोहितपदे नियोक्तुम् अर्हति'' इति अवदत् वृद्धः मन्त्री ।

ततः राजा नक्षत्रेशम् आनाय्य अवदत् - ''भवान् अद्य राजपुरोहितपदे नियुक्तः अस्ति मया । भवान् पिङ्गलं शास्त्रविधेः अनुसारं बलिं कृत्वा तं गर्ते निखाय तदुपरि द्वारं प्रति-ष्ठापयतु'' इति ।

राजपुरोहितपदं प्राप्तवान् नक्षत्रेशः ततः दक्षिणद्वारसमीपं गतवान् । पिङ्गलः यज्ञपशु-रूपेण अलङ्कृतः । हस्तौ पादौ च बद्धौ । ततः सः द्वारसमीपं नीतः । यत्र बलिः समर्पणीया तत्र गर्तः कश्चन निर्मितः आसीत् । तस्य गर्तस्य समीपं गुरुशिष्यौ गतवन्तौ ।

पिङ्गलः सततम् अश्रूणि स्रावयन् विषादेन नक्षत्रेशम् अवदत् - ''वत्स ! अन्यस्य निमित्तं निर्मिते गर्ते मया एव पतितम् अस्ति इदानीम्'' इति ।

''गुरुवर्य ! यः बुद्ध्या अन्यस्य अहितं कर्तुम् उद्युक्तः भवति सः कदाचित् आत्मना निर्मिते गर्ते स्वयं पतेत् अपि । तदास्तां तावत् । भवान् चिन्तां मा करोतु । अहं भवन्तं रक्षिष्यामि । मध्यरात्रपर्यन्तं प्रशस्तः मुहूर्तः कोऽपि नास्ति इति अहं राजानं वदिष्यामि । तदभ्यन्तरे भवान् इतः पलायनं करोतु । अनन्तरम् अहं यथोचितं करिष्यामि'' इति अवदत् नक्षत्रेशः ।

'मध्यरात्रपर्यन्तं प्रशस्तः मुहूर्तः नास्ति' इति राजा तेन सूचितः । पिङ्गलः च रहसि राज्य-सीमापर्यन्तं नीतः । कश्चन मृतः अजः गर्ते निखातः ।

प्रातःकालात् पूर्वं नूतनस्य द्वारस्य प्रति-ष्ठापनं निर्विघ्नतया परिसमाप्तम् ।





# रामायणम्

रामलक्ष्मणाभ्यां सह विश्वामित्रः ईशान्य-दिशि गतवान् । जनकः यत्र यागं करोति तत् स्थलं प्राप्तवन्तः ते । यज्ञशालायाः चतसृषु दिक्षु ऋषयः निवसन्ति स्म । विश्वामित्रः अपि आत्मनः वासाय किञ्चन स्थलं चितवान् ।

अत्रान्तरे महाराजेन जनकेन वार्ता ज्ञाता यत् विश्वामित्रः यागस्थलम् आगतवान् अस्ति इति । अतः सः पुरोहितेन शतानन्देन सह विश्वामित्रसमीपं गतवान् । अर्घ्यपाद्यादिभिः सः विश्वामित्रस्य पूजाम् अकरोत् ।

जनकः विश्वामित्रम् अवदत् यत् इतः द्वादशे दिने यज्ञः समाप्तः भविष्यति इति ।

तावता तेन रामलक्ष्मणौ दृष्टौ । तौ दृष्ट्वा सः अपृच्छत् - ''एतौ राजकुमारौ कौ ? कस्य पुत्रौ एतौ ?'' इति ।

विश्वामित्रः तं रामलक्ष्मणयोः परिचयं श्रावयित्वा अवदत् - ''भवतः समीपे यत् धनुः अस्ति तत्र ज्यायोजनं शक्यते उत न इति ज्ञातुम् एव एतौ अत्र आगतौ स्तः'' इति ।

पुरोहितः शतानन्दः अहल्यागौतमयोः ज्येष्ठः पुत्रः । रामलक्ष्मणयोः कारणतः मातुः अहल्यायाः शापस्य विमोचनं जातम् इत्यतः सः सन्तुष्टः आसीत् । शापदानानन्तरम् आश्रमतः निर्गतः पिता पुनरपि आश्रमम् आगतः अस्ति इति वार्ता तस्मिन् प्रसन्नतां जनितवती आसीत् ।

सः रामं पश्यन् अवदत् - ''भवन्तौ विश्वामित्रस्य अनुग्रहं प्राप्य धन्यतां प्राप्तवन्तौ स्तः । एतस्य महात्मनः कथां श्रावयामि । श्रूयताम्'' इति ।



ततः सः विश्वामित्रस्य जीवनवृत्तान्तं श्रावितवान् -

''पूर्वं ब्रह्मणः कुशः नाम कश्चन पुत्रः आसीत् । तदीयस्य पुत्रस्य नाम कुशनाभः इति । कुशनाभस्य पुत्रः गाधिः । गाधेः पुत्रः एव एषः विश्वामित्रः। सः बहूनि वर्षाणि यावत् राज्यं परिपालितवान् । तदवसरे अक्षौहिणीसैन्येन सह पर्यटनं कुर्वन् सः कदाचित् महामुनेः वसिष्ठस्य आश्रमं प्रति आगतवान् । तस्मिन् आश्रमे बहवः तपस्विनः निवसन्ति स्म । स च आश्रमः ब्रह्मलोकस्य कश्चन भागः इव एव प्रतीयते स्म ।

आश्रमम् आगतान् तान् विश्वामित्रादीन् आतिथ्येन सत्कृतवान् वसिष्ठः । कुशल-वार्तालापः प्रवृत्तः । किञ्चित्कालं सामान्य-विषयान् अधिकृत्य वार्तालापः प्रवृत्तः । ततः वसिष्ठः अवदत् यत् भवन्तः अत्रैव भोजनं कुर्युः अद्य इति ।

तदा विश्वामित्रः अवदत् - ''भवतः दर्शनभाग्येन एव वयं सन्तृप्ताः स्म । अतः भोजनस्य कापि आवश्यकता नास्ति इदानीम्'' इति ।

किन्तु वसिष्ठः एतत् न अनुमतवान् । सः शबलानामिकां धेनुम् आहूय अवदत् - ''भक्ष्य-भोज्य-लेह्य-चोष्यादिसहितं षड्रसोपेतं भोजनं सज्जीक्रियताम्'' इति । शबला तथैव अकरोत् ।

भूरिभोजनं प्राप्य सन्तुष्टः विश्वामित्रः वसिष्ठम् अवदत् - ''महर्षे ! एषा शबला मह्यं दीयताम् । अहं भवते लक्षं धेनूः ददामि । श्रेष्ठानि वस्तूनि राज्ञः एव भवन्ति । अतः एषा धेनुः ममैव भवेत्'' इति ।

''भवान् कोटिशः धेनूः अपि दद्यात् कदाचित् । किन्तु मया एषा शबला न दीयते । एषा एव धनं मम । अस्माकम् एषः समग्रः आश्रमः एताम् एव अवलम्बते'' इति अवदत् वसिष्ठः ।

विश्वामित्रः पुनः अवदत् - ''भवान् यावतीः धेनूः इच्छति तावतीः धेनूः प्रभूतं धनं च अहं यच्छामि । अतः एषा शबला दीयताम्'' इति । तथापि वसिष्ठः शबलायाः दानं निराकृतवान् ।

विश्वामित्रः शबलां बलात् नेतुं प्रयासं कृतवान् । तदा शबला आक्रन्दनं कुर्वती वसिष्ठसमीपम् आगत्य अवदत् - ''किम् एतत् अन्याय्यम् ?'' इति ।

वसिष्ठः असहायकतां प्रकटयन् शबलाम्

अवदत् – ''विश्वामित्रसमीपे अक्षौहिणीसेना अस्ति । मम समीपे तादृशं बलं किमपि नास्ति । अहं किं वा कर्तुं शक्नुयाम् ?'' इति ।

''भवतः तपश्शक्तेः पुरतः विश्वामित्रस्य शक्तिः सर्वथा अकिञ्चित्करी । तस्य सेनायाः संहाराय अहं सेनां स्रष्टुम् अर्हामि । कृपया अनुज्ञायताम्'' इति अवदत् शबला ।

ततः तया पप्लवाः, म्लेच्छाः इत्यादयः विविधाः जनाः सृष्टाः । ते विश्वामित्रसैन्यं निर्दयं संहृतवन्तः ।

एतत् दृष्ट्वा विश्वामित्रस्य शतं पुत्राः शस्त्राणि स्वीकृत्य वसिष्ठम् आक्रान्तुं प्रयासम् आरब्धवन्तः । तदा हुङ्कारमात्रेण वसिष्ठः तान् शतं जनान् अपि भस्मसात्कृतवान् । अल्पे एव काले विश्वामित्रस्य सेना अपि परास्ता जाता । विश्वामित्रः महत् अपमाननं प्राप्य अवनतशिरस्कः जातः । कर्तितपक्षः पक्षी इव असहायः जात आसीत् सः ।

ये सजीवं स्थितवन्तः आसन् तेभ्यः पुत्रेभ्यः राज्यं समर्प्य विश्वामित्रः हिमालयं प्रति प्रस्थितवान् तपश्चरणाय ।

केषाञ्चित् दिनानाम् अनन्तरं शिवः तस्य पुरतः प्रत्यक्षः अभवात्, ''भवान् किम् इच्छति ?'' इति अपृच्छत् च ।

तदा विश्वामित्रः अवदत् – ''मह्यं तादृशं दिव्यम् अस्त्रं ददातु, यस्य कारणतः देव-गन्धर्वराक्षसादयः अपि मदधीनाः भवेयुः । धनुर्वेदस्य सम्पूर्णं ज्ञानं मया प्राप्तं भवतु'' इति ।

''तथास्तु'' इति उक्त्वा शिवः ततः



अदृश्यः जातः ।

एतानि अस्त्राणि स्वीकृत्य विश्वामित्रः वसिष्ठस्य नाशाय निर्गतवान् । सः वसिष्ठस्य आश्रमं प्राप्य तम् आश्रमम् एव दग्धुम् उद्युक्तः जातः ।

तं तथाविधं दृष्ट्वा तस्मात् भीताः ऋषयः इतस्ततः धावितवन्तः । पशुपक्षिणः अपि आश्रमपरिसरं त्यक्तवन्तः । क्षणाभ्यन्तरे आश्रमः शून्यप्रायः जातः ।

एतत् दृष्ट्वा क्रुद्धः वसिष्ठः ब्रह्मदण्डं गृहीत्वा विश्वामित्रस्य पुरतः अतिष्ठत् । विश्वामित्रेण शतशः अस्त्राणि प्रयुक्तानि । तानि सर्वाणि ब्रह्मदण्डेन निगीर्णानि । वसिष्ठस्य शरीरात् ब्रह्मदण्डात् च अग्निज्वालाः निर्गच्छन्ति स्म । अग्निस्फुलिङ्गाः निस्सरन्ति स्म ।

एतस्मात् विश्वामित्रस्य बाणप्रयोगसामर्थ्यं विलुप्तम् । मुनयः वसिष्ठस्य समीपम् आगत्य



अवदन् - ''विश्वामित्रः जितः अस्ति भवता । अतः शान्तः भवतु भवान्'' इति ।

''एतस्मात् क्षत्रियबलात् अपि ब्रह्मतेजः एव गरीयः । अतः अहं तपः चरन् ब्रह्मर्षित्वं प्राप्स्यामि एव' इति सङ्कल्प्य विश्वामित्रः पत्न्या सह तपश्चर्यानिमित्तं दक्षिणां दिशम् अनुसृतवान् ।

तदवसरे हविष्यन्दः, मधुश्छन्दः, दृढनेत्रः, महारथः चेति चत्वारः पुत्राः आसन् तस्य ।

कश्चन कालः अतीतः । ब्रह्मा कदाचित् तस्य पुरतः प्रत्यक्षीभूय अवदत् - ''तपस्याकारणतः सर्वे राजानः एतावता एव भवतः अधीनाः जाताः सन्ति । अतः भवान् राजर्षिः अस्ति'' इति ।

तेन उपाधिना विश्वामित्रः न सन्तुष्टः । सः तु ब्रह्मर्षिपदं प्राप्तुम् इच्छति स्म । अतः तेन पुनः अपि तपः आरब्धम् ।

एतदवसरे एव इक्ष्वाकुवंशीयः राजा त्रिशङ्कुः सशरीरं स्वर्गं गन्तुम् ऐच्छत् । सः स्वीयाम् इच्छां कुलगुरुं वसिष्ठम् अवदत् । वसिष्ठः एतं प्रस्तावं निराकृतवान् ।

त्रिशङ्कुः अचिन्तयत् यत् एतद्विषये दक्षिणदेशवासिनः वसिष्ठपुत्राः साहाय्यं कुर्युः इति । अतः सः तेषां समीपम् अगच्छत् । ते त्रिशङ्कोः इच्छां ज्ञात्वा क्रोधेन अवदन् यत् भवता इतः निर्गन्तव्यम् इति ।

तथापि त्रिशङ्कुः स्वस्य प्रयत्नं न अत्यजत् । सः अवदत् यत् अहम् अन्यं कमपि शरणं यामि इति । तदा क्रोधम् असहमानाः वसिष्ठपुत्राः तम् अशपन् यत् चण्डालत्वं प्राप्यताम् इति ।

शापकारणतः त्रिशङ्कोः शरीरं कृष्णवर्णीयं जातम् । तस्य वस्त्राणि अपि मलिनानि जातानि । तदीयानि आभरणानि लोहमयानि अभवन् । सः वसिष्ठस्य शत्रुं विश्वामित्रं शरणं गतवान् ।

विश्वामित्रः त्रिशङ्कोः कथनं सर्वं श्रुत्वा अवदत् - ''अहं भवन्तम् एतत्स्वरूपयुक्तम् एव स्वर्गं प्रापयिष्यामि'' इति । ततः तेन यज्ञस्य योजना कृता । ऋषीणाम् आनयनाय शिष्याः आदिष्टाः ।

विश्वामित्रस्य निमन्त्रणं प्राप्य सर्वे ऋषयः उपस्थिताः । किन्तु महोदयः विश्वामित्रपुत्राः च न आगताः । ये न उपस्थिताः तान् अशपत् विश्वामित्रः ।

यज्ञः आरब्धः । किन्तु हविः नयनाय देवाः न आगताः । तस्मात् क्रुद्धः विश्वामित्रः त्रिशङ्कुम् उक्तवान् - ''अहम् एतावत्पर्यन्तं

तपः कृतवान् अस्मि । तत् तपोबलम् उपयुज्य भवन्तं स्वर्गं गमयिष्यामि'' इति ।

सर्वेषु मुनिषु पश्यत्सु त्रिशङ्कुः सशरीरम् उपरि स्वर्गस्य दिशि अगच्छत् ।

किन्तु इन्द्रादयः देवाः स्वर्गं प्रति त्रिशङ्कोः आगमनं निराकृतवन्तः । तं ते अधः पातितवन्तः ।

त्रिशङ्कुः अधोमुखतया पतन् उच्चशब्देन आक्रन्दनं कृतवान् - ''महात्मन् ! रक्ष्यताम्, रक्ष्यताम्'' इति ।

क्रुद्धः विश्वामित्रः दक्षिणदिशि अपरं सप्तर्षिमण्डलं निर्मितवान् । नूतनाः ग्रहाः अपि तेन सृष्टाः ।

''अहं नूतनं स्वर्गम् अन्यान् एव देवान् च स्रक्ष्यामि'' इति अवदत् सः ।

एतत् ज्ञात्वा ऋषयः देवाः च भीताः । ते विश्वामित्रसमीपम् आगत्य विनयेन अवदन् - ''महाशय ! शापग्रस्तः त्रिशङ्कुः कथं वा स्वर्गे स्थापयितुं शक्येत ?'' इति ।

''सशरीरं भवन्तं स्वर्गं गमयिष्यामि इति अहं त्रिशङ्कवे वचनं दत्तवान् अस्मि । अतः मया यत् सङ्कल्पितं तत् प्रचलेत् एव'' इति अवदत् विश्वामित्रः ।

अन्ते उभयपक्षीयाभ्याम् अपि सन्धिमार्गः अङ्गीकृतः । सर्वैः सम्भूय निश्चितं यत् त्रिशङ्कुः नवनिर्मितेषु नक्षत्रेषु अधोमुखतया निवसेत्, विश्वामित्रः च नूतनानां देवानां सृष्टिं स्थगयेत् इति ।

ततः विश्वामित्रः दक्षिणदिशं परित्यज्य पश्चिमां दिशम् अनुसृतवान्, पुष्करनामके तपोवने तपस्याम् आरब्धवान् च ।

अत्रान्तरे अयोध्यायाम् अम्बरीषः कश्चित्



यज्ञम् आरब्धवान् । इन्द्रः तस्य यज्ञस्य पशुम् अपहृत्य गतवान् । राजपुरोहितः अवदत् यत् यज्ञपशुः कथञ्चित् अन्वेष्टव्यः एव, अन्यथा नरबलिः वा दातव्या इति । बहुधा अन्वेषणात् अपि यज्ञपशुः न लब्धः इत्यतः अम्बरीषः नरस्य अन्वेषणाय निर्गतः ।

भृग्वातुदनामके पर्वतप्रदेशे ऋचीकः नाम कश्चन मुनिः पत्नीपुत्रैः सह निवसति स्म । अम्बरीषः तत्समीपं गत्वा प्रवृत्तं सर्वं निवेद्य अवदत् – 'अहं भवते लक्षं धेनूः दास्यामि । भवान् स्वस्य पुत्रेषु अन्यतमं मह्यं ददातु'' इति ।

ऋचीकः अवदत् – ''अहं ज्येष्ठं पुत्रं तु दातुं न अर्हामि'' इति ।

तस्य पत्नी अवदत् – ''अन्तिमः पुत्रः दातुं न शक्यः'' इति ।

मध्यमपुत्रस्य नाम शुनश्शेफः इति । सः राजानम् अवदत् – ''एतस्मात् स्पष्टं यत् मम मातापितरौ माम् एव विक्रेतुं सज्जौ इति । गच्छाम तावत्'' इति ।

अम्बरीषः शुनश्शेफेन सह ततः प्रस्थितवान् । घोरे आतपे तौ विश्वामित्रस्य आश्रमं प्राप्तवन्तौ । शुनश्शेफः विश्वामित्रं दृष्ट्वा तस्य अङ्के अपतत्, स्वस्य कथां समग्रां श्रावयित्वा रक्षणम् अयाचत च ।

विश्वामित्रः तस्मिन् करुणावान् जातः । सः स्वस्य चतुरः पुत्रान् दृष्ट्वा अवदत् – ''भवत्सु अन्यतमः बलिरूपेण गच्छतु, एतं च रक्षन्तु'' इति ।

किन्तु ते एतं प्रस्तावं न अङ्गीकृतवन्तः । तेषां निराकृतिं दृष्ट्वा विश्वामित्रः नितरां क्रुद्धः । सः तान् सर्वान् अशपत् ।

ततः विश्वामित्रः शुनश्शेफम् उभौ मन्त्रौ उपदिश्य अवदत् – ''यदा ते भवन्तं यूपस्तम्भे बध्नन्ति तदा भवान् एतौ मन्त्रौ पठतु । तदा अग्निदेवः प्रत्यक्षीभूय भवन्तं रक्षिष्यति'' इति ।

ततः अम्बरीषः शनुश्शेफं यज्ञशालाम् अनयत् । रक्तचन्दनेन सः लिप्तः जातः । रक्तवर्णः धारितः । निम्बवृक्षस्य अधः सः स्तम्भे बद्धः ।

तदा सः मनसि विश्वामित्रबोधितौ मन्त्रौ भक्त्या अजपत् । इन्द्रः तस्मै दीर्घम् आयुः दत्तवान् ।





# तायकमहिमा

कदाचित् कस्मिंश्चित् नगरे कश्चन स्थूलकायः मार्गे अटन् आसीत् । तस्य स्कन्धे श्यामवस्त्रमेकं लम्बमानं दृश्यते स्म । तं दृष्ट्वा मार्गस्थाः बालाः भीत्या पलायिताः । गृहिणीभिः अपि गृहं प्रविश्य द्वाराणि अर्गलेन पिहितानि ।

स्थूलकायः महता परिश्रमेण चलन् उच्चैः उक्तवान् – "तायकस्य महिमा ज्ञातव्यः चेत् शीघ्रम् आगम्यताम्" इति । एतत् श्रुत्वा सर्वेऽपि तम् ऐन्द्रजालिकं मन्यमानाः तस्य समीपम् आगन्तुं भीताः अभवन् ।

किन्तु माधवनामकस्य मनसि यन्त्रविषये कुतूहलम् उत्पन्नम् । सः स्थूलकायस्य समीपं गत्वा – "भ्रातः ! तायकस्य महिमानं प्रदर्शयतु तावत् । अहं तत् द्रष्टुम् इच्छामि" इति उक्तवान् ।

स्थूलकायः तं नखशिखान्तं पश्यन् – "मया सह आगच्छ" इति उक्त्वा तं नगरात् बहिः नीतवान् । ततः स्वकट्यां स्थितं तायकं निष्कासितवान् सः । निष्कासनसमनन्तरमेव तत् सामान्यस्य पुरुषस्य कटौ बन्द्धुं योग्यम् अभवत् ।

"किम् एषः एव एतस्य महिमा ?" इति उपहासपूर्वकं पृष्टवान् माधवः ।

"अये, भवता इतोऽपि तायकस्य महिमा न दृष्टः एव । अहम् एतत् तायकं भवतः कट्यां बध्नामि । ततः यदा अहं भवतः दृष्टिपथात् अपगतः भवामि तदा भवता अस्य महिमा ज्ञायते । यदि अस्मात् तायकात् भवान् मुक्तः भवितुम् इच्छति तर्हि भवता एतत् तायकम् अन्यस्य कट्यां बन्धनीयम्" इति वदन् सः स्थूलकायः तत् तायकं माधवस्य कट्यां बद्ध्वा ततः धावन् अदृश्यतां गतः ।

स्थूलकायस्य अदर्शनानन्तरं माधवः स्वशरीरं पश्यन् दिग्भ्रान्तः अभवत् । यतः सः स्वयं स्थूलकायः जातः आसीत् ।

माधवः पूर्वं मिलितं स्थूलकायम् अन्विष्यन् तस्यां दिशि धावितवान् । कस्मिंश्चित् लघु-



मार्गे कृष्णवस्त्रं धृत्वा गच्छन् कश्चन कृशकायः तेन दृष्टः । तदा तायकस्य महिमा कीदृशः इति ज्ञातवान् माधवः ।

माधवं दृष्ट्वा ग्रामीणाः उक्तवन्तः – ''पूर्वम् एव अस्माभिः ज्ञातम् आसीत् यत् कापि वञ्चना स्यात् अत्र इति । तत् तायकम् निष्कास्य क्षिपतु'' इति ।

माधवः कट्यां बद्धं तायकं निष्कास्य दूरे क्षिप्तवान् । किन्तु अनन्तरक्षणे एव तत् तायकं पुनः आगत्य माधवस्य कट्यां संलग्नम् अभवत् । तत् अग्निरिव तापदायकम् अपि आसीत् । किन्तु यदा माधवः निष्कासनप्रयत्नं स्थगितवान् तदा तत् तायकं शीतलम् अभवत् ।

माधवः इदानीं समस्यासागरे निमग्नः । यतः एकस्य मासस्य निमित्तम् आनीतः आहारः दिनद्वयस्य निमित्तम् अपि पर्याप्तः न अभवत् । सङ्गृहीतं धनं सर्वमपि भोजनाय एव व्ययीकृतवान् सः । तदा मरणमेव वरम् इति विचारः तस्य मनसि उत्पन्नः । अतः सः ग्रामात् बहिः गत्वा आत्महत्यां कर्तुम् ऐच्छत् ।

मध्याह्नसमयः सः । तदा पार्श्वग्रामस्य कश्चन कृशकायः वृक्षतले विश्रान्त्यर्थम् आगतः । सः माधवस्य स्थौल्यं पश्यन् – ''महाशय । मम नाम शङ्करः इति । स्थौल्यं प्राप्तुं कमपि उपायं किं भवान् जानाति ? मम कृशातिकृशम् एतत् शरीरं दृष्ट्वा कोऽपि मह्यं कन्यां दातुं न इच्छति'' इति उक्तवान् ।

एतानि वचनानि माधवे उत्साहं पूरयितुं समर्थानि अभवन् । झटिति माधवः उक्तवान् – ''तायकबलात् स्थौल्यं प्राप्तुं शक्यम्'' इति ।

ततः माधवः तायकं निष्कास्य शङ्करस्य कट्यां बध्नन् – ''अहं यदा भवतः दृष्टिपथात् अपगतः भवामि तदा अस्य तायकस्य महिमा भवता ज्ञायते । यदि भवान् अस्मात् तायकात् मुक्तिम् इच्छति तर्हि अन्यस्य कस्यचन कटौ एतत् बध्नीयात् । एतत् निष्कास्य क्षेप्तुं न यतेत । तथा कृतं चेत् भवन्तमेव एतत् दहेत्'' इति उक्त्वा ततः निर्गतः ।

माधवस्य गमनानन्तरं स्वशरीरे दृष्टिं प्रसारितवान् शङ्करः स्वस्य शरीरं स्थौल्ययुक्तम् अपश्यत् । ततः सः ग्रामं गतः । किन्तु तस्य स्थौल्यं दृष्ट्वा कोऽपि तस्मै कन्यां दातुं न ऐच्छत् । भोजनसमस्यापि उत्पन्ना । ततः सः गृहं गृहं गत्वा भिक्षायाचनम् आरब्धवान् ।

कदाचित् सः भिक्षार्थं कस्यचित् गृहस्य

द्वारं ताडितवान् । तस्मिन् गृहे काचन ब्रह्मचारिणी निवसति स्म । तस्याः रूपम् अतीव कुत्सितम् आसीत् । अत एव तस्याः विवाहः अपि न सम्पन्नः । सा द्वारम् उद्घाट्य शङ्करं दृष्ट्वा पृष्टवती – ''स्वामिन् ! सुन्दरी भवितुं कोऽपि उपायः अस्ति किम् ?'' इति ।

तस्याः प्रश्नः शङ्करस्य मनसि कञ्चन विचारम् अचोदयत् । तेन उक्तम् – ''कुतः न स्यात् ? उपायः तु अस्ति एव । एतत् तायकं तादृशं कार्यं कर्तुम् अर्हति'' इति ।

''तर्हि तत् तायकं कृपया मह्यं ददातु'' इति उक्तवती सा ब्रह्मचारिणी ।

शङ्करः झटिति तायकं कटितः निष्कास्य तस्याः कट्यां बध्नन् – ''मम गमनानन्तरं एतत् तायकं स्वशक्तिं प्रदर्शयिष्यति । यदि अस्मात् तायकात् मुक्तिः इष्यते तर्हि अन्यस्य कट्यां एतत् बन्धव्यम् । एतम् उपायं विना अन्यः परिहारः नास्ति अस्य'' इति वदन् ततः शीघ्रमेव पलायितः ।

ब्रह्मचारिणी महता सन्तोषेण गृहाभ्यन्तरं गत्वा स्वसौन्दर्यं द्रष्टुं दर्पणस्य पुरतः स्थितवती । दर्पणे स्वस्य रूपं दृष्ट्वा सा चीत्कृतवती । यतः तस्याः शरीरं तावत्स्थौल्यं प्राप्तवत् आसीत्, यस्य शरीरस्य पादभागमात्रं दर्पणे द्रष्टुं शक्यम् आसीत् । तादृशं स्वशरीरं दृष्ट्वा सा अचेतना सती भूमौ पतिता । ततः उत्थाय स्वस्य दुरवस्थां चिन्तयन्ती सा रोदनम् आरब्धवती ।

पार्श्वगृहस्य जनाः आगत्य तस्याः एताम् अवस्थाम् अपश्यन् । सा राजकुमार्याः सेविका आसीत् । अतः तां दृष्ट्वा ते उक्तवन्तः –



''राजकुमारी आ चतुर्भ्यः वर्षेभ्यः न हसितवती एव । इदानीं भवतीं दृष्ट्वा सा निश्चयेन हसेत्'' इति । ततः सा ब्रह्मचारिणी स्वकार्यार्थं गता ।

राजकुमारी पर्यङ्के चिन्तया ग्रस्ता सती उपविष्टा आसीत् । भूतसदृशीं स्वसेविकां दृष्ट्वा सा उदरोपपीडं हसितवती ।

''बहूनां दिनानाम् अनन्तरं मयि हासं जनयितुं भवती समर्था जाता । भवत्यां स्थितः महिमा कः ?'' इति ब्रह्मचारिणीं पृष्टवती राजकुमारी ।

''महिमा मयि नास्ति । अपि तु अस्मिन् तायके अस्ति'' इति ब्रह्मचारिण्या उत्तरं दत्तम् ।

''तत् तायकम् एकवारं दृष्ट्वा ददामि, प्रदर्शयतु तावत्'' इति राजकुमार्या उक्तम् ।

''कट्यां बन्धनेनैव अस्य महिमा ज्ञायते'' इति वदन्ती सा ब्रह्मचारिणी तत् तायकं निष्कास्य राजकुमार्याः कट्यां बद्धवती ।

''यदा अस्मात् तायकात् भवती विमुक्तिम् अभिलषति तदा एतत् अन्यस्य कट्यां बन्द्धव्यम्'' इति वदन्ती ततः शीघ्रमेव निर्गत्य गृहं गता सा ।

ब्रह्मचारिण्याः गमनानन्तरं राजकुमारी शिबिकायाम् उपविश्य राजभवनं प्रति प्रस्थिता । किञ्चिद्दूरं यदा गतं तदा शिबिका-वाहकानां मनसि अभासत यत् अकस्मात् शिबिकायाः भारः अधिकः जातः इति । तस्मिन्नेव क्षणे राजकुमारी अपि चीत्कृतवती । एतस्मात् भीताः शिबिकावाहकाः शिबिकां हस्तात् त्यक्तवन्तः । अधः पतिता शिबिका चूर्णतां गता । चूर्णीभूतायां शिबिकायां भूत-सदृशी राजकुमारी उपविष्टा आसीत् ।

ततः सेविकाः महता श्रमेण ताम् अन्तःपुरं नीतवत्यः । पितरं दृष्ट्वा दुःखाविष्टा सती राजकुमारी रुदती एव प्रवृत्तं सर्वम् उक्तवती ।

राजा कोपेन तायकं तस्याः देहात् निष्कास्य दूरे क्षिप्तवान् । किन्तु अपरस्मिन् एव क्षणे तत् तायकं पुनः अपि राजकुमार्याः कटिम् आक्रामत् । अपि च अग्निरिव ज्वलनपीडाम् अपि अकरोत् । पुत्र्याः दुरवस्थां पश्यन् दयया युक्तः राजा स्वयमेव तत् तायकं धृतवान् । राजकुमारी पूर्ववत् कृशा जाता । किन्तु राजा स्थूलकायः अभवत् ।

अतः अनन्तरदिने राजा ब्रह्मचारिणीम् आनायितवान् । तस्याः वचनेन तत् तायकं कथं तया प्राप्तमिति तेन ज्ञातम् । ततः सः शङ्करम् आनाय्य विषयं ज्ञात्वा माधवस्य अन्वेषणम् आरब्धवान् । माधवः तु प्राप्तः । किन्तु माधवाय येन तायकं दत्तं तस्य अभिज्ञानं तु राज्ञा न प्राप्तमेव । तदा राजा एकां घोषणां कारितवान् - ''यः एतत् तायकं धरति तस्य भोजनवस्त्रादिव्यवस्था समग्रा मया परिकल्प-यिष्यते'' इति ।

तदा कश्चन एतत् तायकं धर्तुम् आगतः । सः न कोऽपि अन्यः, अपि तु यः माधवाय तायकं दत्तवान् सः एव !

सः पुनः तायकधारणेन स्थूलकायः भूत्वा राजभवने एव वसन् राजकुमार्याः मनोरञ्जकः अभवत् ।



# अजेयः गरुडः - २

*चित्रम् - गान्धि - अय्यः*




चन्द्रपुर्याः राजा महेन्द्रदेवः घोषयति यत् भूतपूर्वस्य मन्त्रिणः पुत्रः आदित्यः एव मम उत्तराधिकारी भविष्यति इति । तस्य इच्छा यत् आदित्यः दत्तक-पुत्रीम् अरुणां परिणयेत् इति ।

सर्पदेशे तान्त्रिकः नागबन्धुः भस्मसात् भवति । तदीयं गुहामन्दिरं विनष्टं भवति । उभौ दुष्टौ रवीन्द्र-देवः च बन्धिनः जाताः । सेनापतिः नरेन्द्रदेवः इच्छति स्म यत् मम पुत्रः रवीन्द्रदेवः एव राज्ञः उत्तराधिकारी भवेत् इति । पुत्रस्य रक्षणावसरे मकराः तदीयौ पादौ खादन्ति । तस्मात् नरेन्द्रदेवः पङ्गुः भवति ।

चन्द्रपुर्यां शान्तिः प्रतिष्ठापिता भवति । तथापि अराजकतायाः उत्पादनार्थं प्रयत्नः कुत्रचित् प्रवर्त-मानम् एव अस्ति । एतस्य कुतन्त्रस्य नायकः कः ? गरुडम् इष्टदेवतात्वेन प्राप्तवान् आदित्यः किं स्वस्य अपराजेयतां प्रमाणीकर्तुं समर्थः भवति ? एतादृशानां प्रश्नानाम् उत्तराणि प्राप्स्यन्ते आगामिनिषु कथाभागेषु ।


चन्द्रपुरी पुनः न प्रवेष्टव्या इति नियमं विधाय अरखलः ततः प्रेष्यते ।


रवीन्द्रदेवः क्षमायाचना करोति ।
मयि कृपा भवतु महाराज !


राजा रवीन्द्रदेवं तर्जयति ।
भवता देशद्रोहः कृतः रवीन्द्रदेव ! भवान् मम भगिनीपुत्रः अस्ति । अतः भवन्तं क्षान्तवान् अस्मि । किन्तु भवता चन्द्रपुरी परित्यक्तव्या भवति ।


रवीन्द्रदेवः राज्यस्य सीमायां परित्यज्यते ।


मम बन्धनम् अनपनीय एव खलु गम्यते भवद्भिः !


रवीन्द्रदेवः सञ्चारे उत्थाने वा असमर्थः ।
किं कोऽपि मम साहाय्यं कुर्यात् ?
एषोऽहम् आगतः रवीन्द्रदेव !


रवीन्द्रदेवः अरखलम् अभिजानाति ।
अहं मम शक्तेः साहाय्येन भवतः गतिविधीन् परिशीलयन् एव आसम् । सैनिकाः मां यथा न पश्येयुः तथा निलीय स्थीयते स्म मया ।


अहो सौभाग्यम् ! किं भवान् मम निगडम् अपनयेत् ?


अहं भवन्तम् वनवासिमित्राणां समीपं नेष्यामि । ते भवतः साहाय्यं कर्तुम् अर्हन्ति ।


रवीन्द्रदेवः तेन वनवासिनां वसतिं प्रति नीयते । अपमानकरी गर्दभयात्रा अपि मौनेन सह्यते रवीन्द्रदेवेन ।


महोदय ! नागबन्धोः आत्मा एव भवन्तं रक्षितवान् स्यात् ।


रवीन्द्रदेवस्य निगडबन्धः अपनीयते ।
अहो महत् सुखं प्राप्तं मया ।


पानाय रवीन्द्रदेवाय किमपि दीयते ।


मम पिता कथम् अस्ति इति किं ज्ञायते ? सः इदानीं कुत्र अस्ति ?
सः सजीवं तिष्ठति । किन्तु चलने असमर्थः ।


सर्पदंशः यावत् आसन्नः तावता तदीया नौका जले निमग्ना । केचन मकराः आगत्य तस्य पादौ नाशितवन्तः ।
अहम् अचिरात् एव तेन मेलितुम् इच्छामि । कुत्र अस्ति सः ?


सः पर्वतगुहायां निवसति । भवन्तं तत्र नेष्यामः वयम् ।


उभौ वनवासिनौ अखलं रवीन्द्रदेवं व गुहां प्रति नयतः ।
एषः मार्गः अपायबहुलः । तथापि वनवासिनः तस्मै भोजनं नीत्वा यच्छन्ति ।


आदित्यः कैश्चित् प्रमुखैः सह समालोचने मग्नः । तावता कश्चन सैनिकः तत्र उपस्थितः भवति ।
महाराज ! वनवासिनौ दम्पती भवन्तं द्रष्टुम् इच्छतः ।
प्रवेशय तौ ।


भवन्तः गन्तुम् अर्हन्ति । वयं पुनः मिलाम ।


आदित्यः तौ वनवासिनौ दम्पती अभिजानाति । यज्ञकुण्डात् तौ सः रक्षितवान् आसीत् ।
कापि समस्या तु न बाधते इति अहं चिन्तयामि ।
न कापि समस्या । अस्माकं वसतिः शान्तिपूर्णा अस्ति ।
महाराज ! विशेषवार्तां काञ्चित् निवेदयितुम् आवाम् आगतौ ।


महाराज ! केचन भवतः राज्याभिषेके भद्गं जनयितुम् इच्छन्ति ।
ते के ?


खेदस्य विषयः नाम ते अस्मदीयाः वनवासिनः एव । अरखलः नाम कश्चित् तेषु विद्रोहभावनाबीजम् आरोपितवान् अस्ति ।


आवां तान् सेनापतेः पुत्रेण सह स्थितान् दृष्टवन्तौ ।
सः गुहां प्रति नीतः, यत्र च पादहीनः कश्चित् निवसति ।


रवीन्द्रदेवः पित्रा मिलितः ! दुष्टयोः पुनर्मेलनम् ।
अनुवर्तते



भारतीयाः सांस्कृतिकविशेषाः

# वसन्तवैभवम्

राजस्थानराज्ये उदयपुरनगरे वसन्त्यः महिलाः **मेवारपर्व** औत्सुक्येन प्रतीक्षन्ते, यच्च वसन्तऋतौ आचर्यते । आत्मानं विविधैः वर्णमयैः वस्त्रैः अलङ्कृत्य ताः गङ्गौरप्रदेशे सम्मिलिताः भवन्ति । ततः भगवतः ईश्वरस्य देव्याः गौर्याः च मूर्तिः सम्यक् अलङ्क्रियते, शोभायात्रया गङ्गौरघट्टतः पिचोलासरोवरपर्यन्तं नीयते च । तत्र धार्मिकाणि गीतानि गीयन्ते । सङ्गीतनृत्यादयः विविधाः सांस्कृतिककार्यक्रमाः च प्रवर्तन्ते अपि । अन्ते स्फोटकानां द्वारा रञ्जकः कार्यक्रमः प्रवर्त्यते ।

पञ्जाबराज्ये **वैशाखी पर्व** द्वारा वसन्तः स्वागतीक्रियते । एतत् पर्व कृषिसम्बद्धम् । वैशाख-मासस्य प्रथमे दिने (एप्रिल् - १३) एतत् पर्व आचर्यते । महिलाः पुरुषाः च एतस्मिन् दिने भाङ्गानृत्ये भागं वहन्तः आनन्दम् अनुभवन्ति ।



एतत् वैशाखीदिनम् उत्तरभारतस्य बहुषु प्रदेशेषु **नववर्षारम्भदिनत्वेन** आचर्यते । एप्रिल्मासस्य चतुर्दशे दिनाङ्के एतत् आचरणं प्रचलति । पश्चिमवङ्गे गृहस्य पुरोभागः तस्मिन् दिने रङ्गवल्लीभिः अलङ्क्रियते । असमराज्ये चैत्रमासस्य समाप्तिं नूतनवर्षस्य आरम्भं च निमित्तीकृत्य **रङ्गोली बिहू** आचर्यते । दिनद्वयात्मकम् आचरणम् एतत् । प्रथमे दिने धेनवः स्नाप्यन्ते हरिद्रादिभिः अलङ्क्रियन्ते च । एतत् दिनं गरु बिहू इति निर्दिश्यते । अनन्तरदिने भवति मनुष बिहू । आबालवृद्धं सर्वे तस्मिन् दिने नूतनानि वस्त्राणि धृत्वा भूरि भोजनं सेवन्ते, उपायनानि यच्छन्ति च ।

केरले नववर्षाचरणदिनं **विशु** नाम्ना निर्दिश्यते । 'मेदम्'मासः आरप्स्यते एप्रिल्मासस्य १४ दिनाङ्के । एतस्मिन् एव दिने तमिळुनाडुराज्ये नववर्षम् आचर्यते । सूर्यः *मेषराशिं* प्रविशति यत् तत् निमित्तीकृत्य अस्ति एतत् पर्व ।

## भवदर्थकं विज्ञानम्



## दूरवाण्याः आरम्भकथा

अलेक्साण्डर्ग्रहाम्बेल्वर्यः दूरवाण्याः जनकः इति वयं जानीमः एव । सः वस्तुतः ध्वनिचिकित्सकरूपेण स्वस्य वृत्तिजीवनम् आरब्धवान् आसीत् । बधिराः छात्राः अपि यथा वक्तुं शक्नुयुः तथा करणीयम् इति विचारः तं बाधते स्म । अतः सः मानवकर्णयोः कार्यप्रक्रियायाः विस्तृतं वैज्ञानिकम् अध्ययनं कृतवान् । १८७४ तमे वर्षे सः फोनोटोग्राफ्नामकं मानवध्वनितरङ्गग्राहकं साधनम् अन्विष्टवान् । विद्युत्तरङ्गाणाम् उपयोगेन ध्वनिसङ्क्रामणं शक्यम् इति सः अवगतवान् । अतः सः थामस्वाट्सन्नामकेन अनुभविना विद्युत्तन्त्रज्ञेन सह वर्षद्वयं कार्यं कृतवान् । १८७६ तमे वर्षे निरन्तरसंशोधनस्य परिणामतः 'बेल्'वर्यस्य शयनप्रकोष्ठे स्थितः वाट्सनः गृहस्य अधोभागे प्रयोगालये स्थितेन बेल्वर्येण सह सम्भाषणं कृतवान् । बेल्वर्यः वाट्सनम् उक्तवान् आसीत् - 'वाट्सनवर्य ! कृपया अत्र आगम्यताम् । अहं भवन्तं द्रष्टुम् इच्छामि' इति । एतत् एव दूरवाणीसम्भाषणसम्बद्धं प्रथमं वाक्यम् ।

## भवतां परिसरः

### मत्स्याः किमर्थं वासप्रदेशं परिवर्तयन्ति ?



एषु दिनेषु प्रवृत्तानि संशोधनानि ज्ञापयन्ति यत् युरोपियन्-समुद्रः मेडिटेरियन्समुद्रतीरप्रदेशः च क्षतिग्रस्तः अस्ति इति । समुद्र- सस्यविशेषः एव एतस्याः क्षतिग्रस्ततायाः कारणम् इति विज्ञानिनः ज्ञातवन्तः सन्ति । तस्य हानिकारकस्य समुद्रसस्यस्य नाम अस्ति कौलेप्रा टेक्सिफोलिया इति । टेक्सिफोलिया यत्र दृश्यते तत्र सस्यानां मीनादिजीविनां च वृद्धिः न भवति । यतः तत् सस्यं घोरं विषांशं निस्सारयति । अतः तत्रत्याः मत्स्याः अन्यत्र गच्छन्ति वासाय । एतस्य सस्यस्य आकारः सुन्दरः । अतः मत्स्यालयस्य अलङ्काराय एतस्य उपयोगः क्रियते स्म बाहुल्येन । किन्तु यदा एतेषां विषांशनिस्सारणप्रवृत्तिः संशोधनात् ज्ञाता ततः आरभ्य मत्स्यालये एतेषाम् उपयोगः निषेधितः जातः । एषः निषेधः १९९१ तमे वर्षे व्यवहारपथम् आगतः ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### नैसर्गिकाः वर्णाः

यदि वर्णमयत्वं न स्यात् तर्हि बहवः आहारपदार्थाः आकर्षणरहिताः जाताः भवेयुः । अतः एव अनेके कृत्रिमाः वर्णोत्पादकाः पदार्थाः प्राप्यन्ते विपण्याम् । एतेषु केचन रासायानिकैः द्रव्यैः निर्मिताः, पुनः केचन नैसर्गिकतया सज्जीकृताः । आहारे उपयुज्यमानेषु एतादृशेषु नैसर्गिकेषु वर्णोत्पादकेषु 'कोचीनियल् बीटल्'नामकः वर्णः अपि अन्यतमः । कीटेभ्यः सज्जीक्रियते एषः । केन्द्रामेरिकाप्रदेशवासिनः एतान् कीटान् सङ्गृह्णन्ति । मसृणचूर्णरूपेण परिवर्तनात् पूर्वं ते निष्पीड्यन्ते शोष्यन्ते च । ततः समुचितं परिमाणम् आश्रित्य ते जलेन मिश्रीक्रियन्ते, रक्तवर्णीयः घनद्रवः सज्जीक्रियते च । किलोमितस्य तादृशस्य घनद्रवस्य सज्जीकरणाय १,५०,००० जीविनः उपयोक्तव्याः भवन्ति । एषः घनद्रवः केक्प्रभृतीनां मधुरपदार्थानां निर्माणे उपयुज्यते ।

## अभिवर्ध्यतां ज्ञानशक्तिः

### प्रधानमन्त्रिणः वित्तसचिवान् च अधिकृत्य अत्र सन्ति प्रश्नाः

१. कः प्रधानमन्त्री स्वस्य सर्वकारस्य विषये इदम्प्रथमम् अविश्वासविधेयकं सम्मुखीकृतवान् ? एतत् विधेयकं केन प्रस्तुतम् ?

२. कः प्रधानमन्त्री अविश्वास-विधेयकस्य उपस्थापनस्य अनन्तरं पराजयं प्राप्य त्यागपत्रं दत्तवान् ? तच्च कदा ?

३. गणतन्त्रप्राधान्यस्य स्वीकारस्य अनन्तरं भारते कः प्रथमं वित्तविधेयकम् उप-स्थापितवान् ?



४. कः दीर्घकालं यावत् अर्थसचिवपदे आसीत् ?

५. स्वतन्त्रभारतस्य प्रथमः वित्तसचिवः कः ?

६. भारते प्रथमं वित्तविधेयकं कः उपस्थापितवान् ?

(उत्तराणि ६६ तमे पृष्ठे)



# चित्रशीर्षिकास्पर्धा



SOURAA

अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-सम्बन्धिना वाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?



A. SEETHA DEVI

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'फेब्रवरी'मासस्य शीर्षिकाप्रेषिका -

**श्रीमती एस्. सिद्धार्था,**

**C/o.** थियासोफिकल् सोसैटी,

**चेन्नै - ६०० ०२० (त.ना.)**

## पुरस्कृता शीर्षिका





**अहो, श्रमसाध्यानि एव सर्वाणि ।**

**ननु श्रमसाधितानि एव मधुरतराणि !!**



## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. जवहरलालनेहरू । आचार्येण कृपलानिना ।

२. वि.पि. सिङ्ग् । १९९० तमे वर्षे ।

३. जान् मथाय् ।

४. मुरार्जीदिसायी ।

५. आर्.के. षण्मुखं चेट्टि ।

६. सर् जेम्स् विल्सन् (स्वातन्त्र्यप्राप्तितः पूर्वम्) ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

# A TREASURE-TROVE FOR TALENTED TOTS





**Junior**
**CHANDAMAMA**

## THE ONE-STOP COMPLETE FUN AND ACTIVITY MAGAZINE

**NOW AVAILABLE AT YOUR NEAREST NEWS STAND FOR RS.15 PER COPY**



- Games, puzzles, riddles, stories, colouring activity and more...

- Good habits grow when young. Check out articles and features in which values are taught subtly and let your child learn about Indian culture and heritage.










- Pick up a copy of Junior Chandamama for interesting new stories and puzzles to be read out to the kiddies.



**PAY ONLY RS.150 FOR ANNUAL SUBSCRIPTION AND SAVE RS.30**

CHANDAMAMA (Sanskrit) APRIL 2006
Regd. with Registrar of Newspaper for India No. 42664/85
Regd No. TN/CC(S)Dn/158/06-08
Licensed to post WPP - Inland No.TN/CC(S)Dn/82/06-08, Foreign No. 83/06-08

# BEST BUY FOR WORLD BOOK DAY. ALSO BEST GIFT FOR YOUR DEAR AND NEAR ONES.

THREE EXCITING BOOKS FROM
TWO RENOWNED WRITERS FOR CHILDREN

## MANOJ DAS AND RUSKIN BOND
















Also four books of
**LEGENDS AND PARABLES OF INDIA**
from CHANDAMAMA







**INDIA IS A LAND OF STORIES, RICH IN LEGENDS, PARABLES AND MYTHS.**

*Chandamama* has enriched many generations of young minds with these stories. The spiritual subtext and moral lessons in these delightful stories continue to fascinate and mould young Indian minds.

*Popular Prakashan* has co-published these stories to educate, entertain and inspire the growing generation.

CHANDAMAMA   PopulaR prakashan

FOR FURTHER ENQUIRIES CONTACT :
CHANDAMAMA INDIA LTD., 82, DEFENCE OFFICERS COLONY,
CHENNAI - 600 097.